§२. उग्रसेनपुरवर्णनम् ।

जम्बूद्वीपाभिधे द्वीपे भरतार्द्धे च दक्षिणे ।
उग्रसेनपुरं मध्य-मण्डले भाति चन्द्रवत् ॥ १४ ॥

उत्सङ्गे विनिवेश्य येन विसरत्कल्लोलवेल्लद्भुजा
तीरस्थैः प्रतिमागतैर्नृपगृहैरङ्गैरिवालिङ्गिता ।
कालिन्दी कलुषीकृतेव शनकैः संलीय गङ्गामनु
त्रासादुद्गतपाण्डिमेव जलधिं कम्पोत्तरं गच्छति ॥ १५ ॥

नागानिन्द्रगजोपमांश्च तुरगानुच्चैःश्रवःसंमितान्
दातॄन् कल्पतरुप्रभांश्च शतशो रामारमायाः समाः ।
यत्र प्रेक्ष्य पयोधिनोपरि विधेर्ग्रस्तं पुरा यद्द्विपं
देवादेवगणैस्तदेव मिलितैर्नूनं समुद्गारितम् ॥ १६ ॥

नानामण्डपिकासु यत्र धनिकव्यापारिभिः सञ्चिता-
नुत्तुङ्गानधिरुह्य पण्यनिकरान् शैलोपमान् कौतुकात् ।
पुंसां प्रेक्षणकारिणां चिरतरं चेतांसि चक्षूंषि च
श्रान्तानीव ततोऽवरोढुमसहान्यध्यासते निश्चलम् ॥ १७ ॥

मातङ्गांस्तुरगानवगान् (?) वृषचरान् दासेरकानेडकान्
तत्तद्देशसमुद्भवानपि नरान् वासांसि रत्नानि च ।
स्वादिष्टं फलमूलशाकमतुलं सर्वर्तुजं सर्वदा
यत्र प्रेक्ष्य च देशकालविधृतौ सर्वेऽपि संशेरते ॥ १८ ॥

मिलिताश्च यत्र मञ्जुभिर्वलभीभिर्मुखकान्तिभिर्मिथः ।
अतिसङ्कुलतां गता गृहास्तदुदस्यन्ति भुजानिव ध्वजान् ॥ १९ ॥

चन्द्रकान्तजलैश्चन्द्राकारैश्च मिलितैर्मिथः ।
चन्द्रस्य चन्द्रकान्तानां ज्ञायते यत्र नान्तरम् ॥ २० ॥

चन्द्रकान्तेषु संक्रान्तश्चन्द्रमाः शुशुभे निशि ।
स्वयं कुर्वन्निव स्नानं श्यामताऽपहृतीच्छया ॥ २१ ॥

सौधोत्सङ्गनिषण्णानां योषितां वदनेन्दुभिः ।
हारतारावलीयुक्तैर्यत्र राका निशाऽनिशम् ॥ २२ ॥

वहिरेति पथः समाक्रमन्नविधार्योऽपि च यत्र संविशन् ।
उदधाविव निम्नगारयः क्वचिदागन्तुगणो विलीयते ॥ २३ ॥

शतशोऽत्र नृपास्तु यादृशामलमेकोऽपि दिशं विभूषयेत् ।
पिटके हि भवन्ति भूरिशो मणयो ये तनुमण्डनाः पृथक् ॥ २४ ॥

प्रदोषे यद्गवाक्षस्थैर्वर्णिनीवदनोत्करैः ।
स्मेराम्भोरुहसंशोभि सरोवत्प्रतिभासते ॥ २५ ॥

स्पर्शाच्चन्द्रद्युतेर्यत्र काशन्ते चान्द्रसद्गृहाः ।
क्षरद्वारिकणैः स्वस्थैः पतन्मुक्ताफलैरिव ॥ २६ ॥
सुकृतामृतसिक्तानां यत्र भान्ति ध्वजाञ्चलाः ।
तीर्थेशवेश्मनां पुण्यद्रुमाणां पल्लवा इव ॥ २७ ॥
कृतपापविषग्रासाः प्रासादाः काममर्हताम् ।
यस्यां पताकाजिह्वाग्रैर्लिहन्तीव सुधाकरम् ॥ २८ ॥
यस्यामनुपमानोऽपि सोपमानोऽभवज्जनः ।
मणिमन्दिरभूमीषु स्वैरेव प्रतिबिम्बितैः ॥ २९ ॥
निर्निमेषा मिथोरूपदर्शनाद्दम्पतिव्रजाः ।
धर्मक्षेत्रे बभुर्यत्र स्वर्गपौरा इवागताः ॥ ३० ॥
रत्नकुम्भान्वितैः प्रोच्चैर्यत्र चैत्यैः सतां पुरः ।
मोहध्वान्तद्रुहो दीपा इव मोक्षाध्वदर्शने ॥ ३१ ॥
यद्वर्णिनीमुखेभ्योऽपि पुरस्तादिन्दुमण्डलम् ।
अलक्ष्यत वियज्जीर्णभित्तौ कृमिपुटोपमम् ॥ ३२ ॥
वियद्भ्रमणखिन्नानां गभस्तिरथवाजिनाम् ।
यत्सौधवैजयन्त्योऽपि भृशं व्यजनतां ययुः ॥ ३३ ॥
विभावर्यामपि जना विभावर्याङ्गभूषणैः ।
ध्वस्तध्वान्तभरा यत्र यान्ति प्रान्तरवर्त्मसु ॥ ३४ ॥
यत्रेश्वराः प्रतिगृहं गौर्योऽपि च गुणाधिकाः ।
तत् पुरं पौरसङ्कीर्णं स्वर्गादप्यतिरिच्यते ॥ ३५ ॥
अनेकधनदोपेतं तत् पुरं वीक्ष्य तज्जनः ।
अलकां चैकधनदां जातुचिन्न समीहते ॥ ३६ ॥
कुण्डलीकृतकायेन शेषेणेव समन्ततः ।
निधानमिव तद् रेजे शालेन परिवेष्टितम् ॥ ३७ ॥
परिखाजलसंक्रान्तैर्व्रजन्नरनराधिपैः ।
नागलोकः समायातो वीक्षितुं तत् पुरं किमु ॥ ३८ ॥

§ ३. शाहिश्रीमदकब्बरप्रतापवर्णनम् ।

तथा तत् पालयामास शाहिः श्रीमदकब्बरः ।
नीत्या यथैव नास्मार्षीत् कौशलेयं जनोऽखिलः ॥ ३९ ॥
यत्प्रतापाग्निना दग्धाः शलभा इव दस्यवः ।
केवलं ग्रामवृद्धेषु तत्तद्वार्त्तैर्व्यवस्थिता ॥ ४० ॥
शत्रुस्त्रीनेत्रबाष्पूरैः साञ्जनैः सिञ्चितोऽपि हि ।
यद्यशश्चन्द्रमाः श्वेतोऽभवच्चित्रमिदं महत् ॥ ४१ ॥

पीतशात्रवरक्तापि यस्य निस्त्रिंशसैरभिः ।
ददौ शुभ्रं यशोदुग्धं चित्राचित्रमिदं जगत् ॥ ४२ ॥
शीतोऽप्यत्यन्तशुभ्रोऽपि चित्रं यस्य यशःशशी ।
वैरिणां हृदये दाहं मुखे च श्यामतां व्यधात् ॥ ४३ ॥
शोषिता यत्प्रतापेन द्विषतां सौर्यवल्लयः ।
पत्रैरिवासिभिर्भ्रष्टै रणारण्यमपूरयत् ॥ ४४ ॥
नित्यं यदीयधर्मस्य वर्द्धमानस्य सर्वतः ।
चैत्यश्रियः स तन्वन्ति न्युञ्छनानि ध्वजाञ्चलैः ॥ ४५ ॥
उदेप्यतः प्रतापाग्नेर्धूमदण्ड इवोन्मुखः ।
यदसिर्युधि शत्रुस्त्रीनेत्रैर्दृष्टो जलाविलैः ॥ ४६ ॥
कर्पूरपूरवद् यस्य यशोरोदःसमुद्रके ।
जज्ञेऽरिदुर्यशःकृष्णागारसङ्गाचिरं स्थिरम् ॥ ४७ ॥
यदीयप्रचलत्सैन्यधूलिधूसरिताननाः ।
अदृश्यतां दिशः प्रापुस्तत्क्षणाद्वैरिभिः सह ॥ ४८ ॥
यथात्राहतनिःस्वाननिःस्वनैर्वधिरीकृतः ।
नागलोकस्ततो लोकैर्दृक्कर्ण इति गीयते ॥ ४९ ॥
यत्सैन्यभेरीभाङ्कारैर्ब्रह्माण्डस्फोटशङ्कया ।
अवष्टम्भकृते दिक्षु किं धात्रा विधृता गजाः ॥ ५० ॥
यत्सैन्यप्रोच्छलद्धूलीधोरणीपातशङ्कितः ।
गतागतान्यसौ चक्रे पयोधिः प्रत्यहं किमु ॥ ५१ ॥
मा कार्षीदर्थिसान्मेरुमसाविति विरञ्चिनः ।
पुष्पदन्ताविमौ चक्रे तत्र प्राहरिकौ किमु ॥ ५२ ॥
वर्षन्तं स्वर्णधाराभिर्वीक्ष्य धाराधरो हि यम् ।
श्यामास्यः समभूत् सौवदानशौण्डत्वहानितः ॥ ५३ ॥
षड्दर्शनपशुग्रामं गोपाल इव पालयन् ।
सरसायां रसायां स भूपालः सुतरां बभौ ॥ ५४ ॥
यत्सैन्यप्रोच्छलद्वाहखुरक्षुण्णधरारजः ।
तथा तद्व्यानशे व्योम यथा रात्रिरभूद्दिवा ॥ ५५ ॥
न सा कला न तद् ज्ञानं न तद् धैर्यं न तद्बलम् ।
शाहिना युवराजेन यत्र नैवोद्यमः कृतः ॥ ५६ ॥
यत्प्रतापाग्नितापार्त्तः कृष्णः शेते किमम्बुधौ ।
तुहिनाद्रौ स्थितः शम्भुः स्वयम्भूः पङ्कजेऽगमत् ॥ ५७ ॥
अथ यावदभूदेककर्णा सागरमेखला ।
अनेन दानशौण्डेन द्विकर्णा समजायत ॥ ५८ ॥

इयं सार्वत्रिकी ख्यातिर्यत् तिलाज्जायते खलः ।
तच्चित्रं यद् रणेऽनेन खलाः सर्वे तिलीकृताः ॥ ५९ ॥
संग्रामाभिमुखं वीक्ष्य यं नृपं त्रिदिवौकसः ।
मा स्वर्गमपि गृह्णीयाद्भीत्येवास्वप्नतां ययुः ॥ ६० ॥
शेखूजी-पाहडी-दानशाहाख्याः सत्त्वशालिनः ।
त्रयस्त्रिभुवनख्याताः सूनवस्तस्य जज्ञिरे ॥ ६१ ॥
यत्सर्वसैन्यसप्तीनां लक्षाः स्युः सप्तविंशतिः ।
स्वारोहणकृते ते च सहस्रा ह्यधिका दश ॥ ६२ ॥
चतुर्दशसहस्राः स्युः सिन्धुरा यस्य बन्धुराः ।
चतुरस्था इमे ज्ञेयाः सैन्ये लक्षमिताः पुनः ॥ ६३ ॥
स्वकीयभुजदण्डेन वैरिवर्गं विजित्य यः ।
जग्राह गूर्जरं देशं स्वर्गखण्डमिवापरम् ॥ ६४ ॥
अनेकदेशोपगतैर्विबुधैर्विबुधोपमैः ।
संक्रन्दन इवासेव्यमानः स सुतरां बभौ ॥ ६५ ॥

॥ इति श्रीअकबरशाहिवर्णनम् ॥

§४. शाहिसचिवशेखअबलफजलवर्णनम् ।

धीगुणैरष्टभिर्युक्तः स्वामिभक्तः शुभाशयः ।
विशिष्टाचरणासक्तो विरक्तः पापकर्मतः ॥ ६६ ॥
अबलात्फजलः शेखः समभूत् तस्य धीसखः ।
निःशेषवाङ्मयाम्भोधेः पारदृश्वा विदांवरः ॥ ६७ ॥
जैने मीमांसके बौद्धे सांख्ये वैशेषिकेऽपि च ।
चार्वाके जैमिनीये च काव्ये पातञ्जलेऽपि च ॥ ६८ ॥
वेदान्ते शब्दशास्त्रे च संगीते नाटकेऽपि च ।
अलङ्कारे पुराणे च छन्दोग्रन्थे च शाकुने ॥ ६९ ॥
ज्योतिःशास्त्रे तथा संख्याशास्त्रे सामुद्रिकेऽपि च ।
नीतिशास्त्रे च कोकाख्ये शालिहोत्रे च पालके ॥ ७० ॥
इत्यादिसर्वशास्त्रेषु विस्तृता यस्य शेमुषी ।
नास्ति तद्वाङ्मये तेन न दृष्टं यच्च न श्रुतम् ॥ ७१ ॥
अशेषैः शेमुषीमुख्यविशेषैः शेखपुङ्गवम् ।
विशिष्टं वीक्ष्य यं वेधा व्यधात् शङ्कां स्वनिर्मितौ† ॥ ७२ ॥
पृष्ठे धृत्वा क्षमां शेषो नाभूदुच्छ्वसितुं क्षमः ।
हृद्यसौ तां दधानोऽपि चित्रं यत्प्रगुणोऽभवत् ॥ ७३ ॥

† इयं निर्मितिः मम किंवाऽन्यस्येति ।–टिप्पणी ।

यद्गाम्भीर्यगुणं वीक्ष्य समुद्रत्वं गतोऽम्बुधिः ।
यद्धियं च तिरोभूतो मन्ये चित्रशिखण्डिजः ॥ ७४ ॥
आकल्पोपगतं शाहिमुरादं स्वात्मसम्भवम् ।
श्रुत्वाऽपाच्यां प्रभुः प्रैपीत् यं कृत्वा दण्डनायकम् ॥ ७५ ॥
देवभूयंगते तस्मिन् शाहिसूनौ समुच्छ्रितम् ।
भग्नं शत्रुबलं येन सैन्यं स्वस्य च रक्षितम् ॥ ७६ ॥
तदुदन्तं समाकर्ण्य संमदोल्लसितेक्षणः ।
'दलथम्भन' इत्याख्यां चक्रे यस्य धराधवः ॥ ७७ ॥

॥ इति शेखश्रीअबलफजलवर्णनम् ॥

§५. अकब्बरजिज्ञासायां हीरसूरेर्गुणवर्णनम् ।

अन्येद्युः पृथिवीपालो मध्यमण्डपमध्यगः ।
पप्रच्छ गूर्जरायातान् सामन्तानिति सादरम् ॥ ७८ ॥
तपस्वी निःस्पृहो दान्तः सौम्यमूर्त्तिः जितेन्द्रियः ।
युष्माभिः साम्प्रतं तत्र कोऽपि दृष्टः श्रुतोऽथवा ॥ ७९ ॥
तन्निशम्य ततः प्रोचुः सामन्तास्ते प्रभोः पुरः ।
एतादृक् श्रूयते तत्र हीरसूरिर्न चापरः ॥ ८० ॥
अस्माभिस्तद्गुणाः सर्वे वक्तुं शक्या न जातुचित् ।
तथापि स्वधिया किञ्चित् दिङ्मात्रमिह दर्श्यते ॥ ८१ ॥

तथा हि–

वक्तुं सहस्रजिह्वोऽपि न क्षमो यद्गुणानिति ।
अपयेवाहिनाथः किं वडवामुखमीयिवान् ॥ ८२ ॥
अनन्यलभ्यां यन्मुद्रां भूयो भूयो विलोकयन् (?) ।
नाकिनो निर्निमेषत्वमापुः का गणना नृणाम् ॥ ८३ ॥
स्नेहपीयूषपानार्थमुभे वर्त्तुलिके किमु ।
यन्नेत्रमिषतो मन्ये निर्मिते विश्वरेतसा ॥ ८४ ॥
यद्वक्त्रनिर्मितेः शेषदलैरन्यदलान्वितैः ।
विधिश्चन्द्रं व्यधात्तेन विशीर्णोऽङ्कमिषात्किमु ॥ ८५ ॥
सदा विनिद्रं मधुपैर्नोच्छिष्टं कण्टकोज्झितम् ।
इति विज्ञाय यद्वक्त्राम्बुजे तस्थौ सरस्वती ॥ ८६ ॥
गुणान् गणयितुं यस्य न क्षमोऽभूद्बृहस्पतिः ।
इति कौलि(ली)नभीत्येव प्रागेव त्रिदिवं ययौ ॥ ८७ ॥
यदीयाद्भुतसौन्दर्यलिप्सयेव निशापतिः ।
शम्भुशीर्षवहद्गङ्गोपकण्ठे कुरुते तपः ॥ ८८ ॥

दीप्तिमन्तो भृशं यस्य राजन्ते दशनास्तताः ।
स्वतोद्गतशुभध्यानवृक्षस्य प्रसवा इव ॥ ८९ ॥
विभान्ति यच्छिरोदेशे पलितालकपङ्क्तयः ।
राहुभीत्येव शरणागता इव शशित्विषः ॥ ९० ॥
यद्गिरो वीक्ष्य माधुर्य्यमतिशायि सितोपला ।
लज्जयेवाविशत्काचघटीसंक्षिप्तविग्रहा ॥ ९१ ॥
दृश्यते साम्प्रतं यस्मिन् निःस्पृहत्वमलौकिकम् ।
न जातुचिद्दीयमानं धनं गृह्णाति कस्यचित् ॥ ९२ ॥
भव्याम्भोरुहसन्दोहविबोधनदिवाकरः ।
वैराग्यरसपाथोधिसमुल्लासनचन्द्रमाः ॥ ९३ ॥
अत्युग्रतपसां धाम ध्यानासक्तमनाः सदा ।
भैक्ष्यमात्रोपजीवी च ब्रह्मचारी महामुनिः ॥ ९४ ॥
इत्थं श्रीगूर्जरायातसामन्तादिजनोदितम् ।
श्रीहीरसूरेराकर्ण्य परभागं विशांपतिः ॥ ९५ ॥

§ ६. अकब्बरकृतहीरसूरेराकारणम् ।

स्फुरन्मानं ततः प्रैषीत्तेषामाहूतिहेतवे ।
श्रीमत्साहिबखानस्य गूर्जरेशस्य शाहिराट् ॥ ९६ ॥
क्रमेण तत्क्रमाम्भोजे तस्मिन् हंस इवागते ।
सम्यक् स्वान्ते तदन्तःस्थं प्रमेयं प्रविभाव्य च ॥ ९७ ॥
श्राद्धान् वृद्धानथापृच्छ्य राजद्रङ्गनिवासिनः ।
गुरूनाजूहवत्सोऽपि ततो गन्धारबन्दिरात् ॥ ९८ ॥
आकर्ण्याकारणं शाहेः प्रतस्थे श्रीगुरुस्ततः ।
जाङ्घिकैः शकुनैः सानुकूलैः सूचितवैभवः ॥ ९९ ॥
क्रमादहम्मदावादपुरे सूरिः समीयिवान् ।
नभोनीरधिवर्णिन्याः प्रतीरे सुप्रतीकवत् ॥ १०० ॥
प्रीतिप्रह्वैः प्रभुस्तत्र परिवव्रे व्रतिव्रजैः ।
सुनासीर इवास्थानीमासीनः स्वर्गिणां गणैः ॥ १०१ ॥
प्रबोधयन् सुदृक्पद्मान् कुदृक्पङ्कांश्च शोषयन् ।
स्पर्द्धयेव रवेः सूरेः प्रतापो व्यानशे दिशः ॥ १०२ ॥
प्रातस्तत्रत्यसङ्घेन सार्द्धमुन्नतिपूर्वकम् ।
समं साहिबखानेन सुहृद्गोष्ठीं व्यधाद्गुरुः ॥ १०३ ॥
भृशमभ्यर्थ्यमानोऽपि तेन यानादिवस्तुभिः ।
तदीयं नाग्रहीत् किञ्चिन्निःस्पृहा मुनयो यतः ॥ १०४ ॥

आगत्योपाश्रये तत्र स्थित्वा स्वल्पदिनानि सः ।
ततः प्रतस्थे सूरीशः पूर्वाद्रेरिव भानुमान् ॥ १०५ ॥
श्राद्धवर्गैः प्रतिग्रामकृतप्रावेशिकोत्सवः ।
श्रीहीरः पावनीचक्रे क्रमात् फत्तेपुरं पुरम् ॥ १०६ ॥
अनेकवाद्यनिर्घोषबधिरीकृतदिङ्मुखः ।
श्रीसंघः स्थानसिंहाद्यः सर्वः संमुखमीयिवान् ॥ १०७ ॥
नमस्कृत्य कर्णेहत्य क्रमं तद्देशनारसैः ।
गाङ्गेयरूप्यमुद्राभिरङ्गपूजां व्यधाच्च सः ॥ १०८ ॥
तत्तत्तदङ्गविन्यस्तं स्वर्णमुद्रामिषात् किमु ।
श्रीगुरून् सेवयांचक्रे स्वर्णं तत्कान्तिकाङ्क्षया ॥ १०९ ॥
स्थापितास्तन्नवाङ्गेषु तारमुद्राश्च रेजिरे ।
तारास्तद्दम्भतः किं तद्वक्त्रचन्द्रं निषेविरे ॥ ११० ॥

§ ७. शाहिअकब्बर-हीरसूरिसम्मिलनवर्णनम् ।

तस्मिन्नेव दिने प्रीतिपूर्वकं शाहिना समम् ।
पूर्वोक्तसचिवद्वारा मिलितास्ते महौजसः ॥ १११ ॥
हर्षोत्कर्षोल्लसत्स्वान्तवक्त्रौ तत्रैव विष्टरे ।
पुष्पदन्ताविवैकत्र तावुभावपि तस्थतुः ॥ ११२ ॥
धर्मं पप्रच्छ भूभर्ता स्वागतप्रश्नपूर्वकम् ।
सर्वोत्कृष्टतमं ते च दयामूलं तमभ्यधुः ॥ ११३ ॥
अत्यन्तमृगयासक्तमनसोऽपि महीपतेः ।
तदाकर्ण्याभवत्तस्य कृपया कोमलं मनः ॥ ११४ ॥
कारं कारं नमस्कारं दर्शं दर्शं च दर्शनम् ।
स्मारं स्मारं गुणग्रामं वारं वारं नृपोऽवदत् ॥ ११५ ॥
अहो ! प्रादुरभूद्भाग्यमहो ! वृष्टिरभ(ऽरन ?)भ्रभूः ।
लोचनाभ्यां यदद्य त्वं दृष्टः शिष्टशिरोमणिः ॥ ११६ ॥
भूलोके भोगिलोके च स्वर्लोके स न कश्चन ।
येनोपमीयसे तेन त्वमेव त्वन्निदर्शनम् ॥ ११७ ॥
भूमान् भूयोऽप्यभाषिष्ट तद्गुणान् वीक्ष्य विस्मितः ।
श्रीमद्भ्यः किं निरीहेभ्यो दातुमौचित्यमञ्चति ॥ ११८ ॥
ततोऽस्मदीयसौधेऽस्ति जैनराद्धान्तपुस्तकम् ।
ऊरीकृत्य तदस्माकं विधेयोऽनुग्रहो महान् ॥ ११९ ॥
इत्युदीरितमाकर्ण्य सकर्णगजकेसरी ।
तत् समादाय तत्रैव चित्कोशीकृत्य मुक्तवान् ॥ १२० ॥

पुनः प्रोचे पुरस्तस्य भूजानिर्भूभृतां वरः ।
यदिष्टं भवतामस्मद् गृह्यतामनुगृह्य नः ॥ १२१ ॥
प्रभुः पर्युषणापर्वदिनान्यष्टौ विशिष्टधीः ।
अहिंसां सर्वजन्तूनां ययाचे भूमरुत्वतः ॥ १२२ ॥
ततः प्रशान्तमूर्त्तित्व-निःस्पृहत्वादिरञ्जितः ।
तान्यहानि ददौ तस्मै चतुरभ्यधिकानि सः ॥ १२३ ॥
श्रीशाहेर्मिलने लाभो गुरूणां योऽभवत् तदा ।
अनेकाभी रसज्ञाभिः शक्यो वर्णयितुं न सः ॥ १२४ ॥
वर्षाश्चतस्रस्तद्देशे प्रविधाय प्रतस्थिरे ।
शान्तिचन्द्रमुपाध्यायं तत्र मुक्त्वाऽथ सूरयः ॥ १२५ ॥
बोधयन्तः प्रतिग्रामं भव्यलोकांश्च भूरिशः ।
गूजरं पावनीचक्रुः क्रमात् श्रीहीरसूरयः ॥ १२६ ॥
प्रतापाक्रान्तदिक्चक्रो भूशक्रः शक्रविक्रमः ।
अगात् तद्गमनादर्वाक् शाहिर्लाभपुरं पुनः ॥ १२७ ॥
सूरेर्भूधनबोधनादिचरितप्रोद्भूतकीर्त्तिप्रथां
प्रीत्याऽऽकर्ण्य शिरो विघूर्णनपरे जातेऽखिले विष्टपे ।
श्रोतुं सोत्सुकमानसो दशशतीमक्ष्णामिवाखण्डलः
कर्णानाममरावतीविरचितावासाद्वृणीते विधेः ॥ १२८ ॥

॥ इत्युपाध्यायश्रीसिद्धिचन्द्रगणिविरचिते श्रीशत्रुञ्जयादिसमस्ततीर्थकरमोचनाद्यनेकसुकृतकारि-महोपाध्यायश्रीभानुचन्द्रगणिप्रभावकपुरुषचरिते नगरनृपसचिवभट्टारकश्रीहीरविजयसूरिश्रीशाहिमिलनधर्मगोष्ठीकरणद्वादशदिवसामारिस्फुरन्मानप्रदान-श्रीगुरुगूर्जरागमनादिवर्णनो नाम प्रथमः प्रकाशः ॥ १ ॥

## ॥ द्वितीयः प्रकाशः ॥

इतश्च–कोऽपि मेधाविमूर्द्धन्यो लुम्पाकानां मतेऽभवत् ।
श्रीहानर्षिरिति ख्यातो नाम्ना मध्ये मणिर्यथा ॥ १ ॥
सिद्धान्तानेष निध्याय कदाचिच्चित्तचक्षुषा ।
प्रतिमामार्हतीं चित्रवल्लीं चाप इवैक्षत ॥ २ ॥
लुम्पाकानां मतात्तस्मादिव कारानिकेतनात् ।
निर्गन्तुं कामयामास स हानर्षिमुनिस्ततः ॥ ३ ॥
तन्मताधिकृतान् वेषधरान् वागुरिकानिव ।
पाशे पातयतो मुग्धान् मृगानिव विवेद सः ॥ ४ ॥
अमी व्रीड्वां प्रकुर्वन्ति वका इव शनैः शनैः ।
सतां सम्यग्दृशो हन्तुं काङ्क्षतः शफरीरिव ॥ ५ ॥
विगोपनमिवैतेषां वेषं वेषभृतामवैत् ।
तन्मतस्थं पुनर्मेने सोऽन्धकूपगतं निजम् ॥ ६ ॥
आप्तोक्तिरत्नगर्भायाममीषां प्रतिमामार्हताम् ।
निधिकुम्भीव दुःस्थानां पथिकी नाभवद्दृशोः ॥ ७ ॥
ऐहिकामुष्मिके सौख्ये दूरेऽत्र स्थायिनो म[म] ।
नीरतीरे सरःपङ्के निमग्नस्येव दन्तिनः ॥ ८ ॥
स पल्वलमिवामेध्यं हंसो लुम्पाकपुङ्गवः ।
अत्याक्षीत् पक्षमात्मीयं समं शिष्यैः परःशतैः ॥ ९ ॥
लक्ष्मीलीलाललामं स तपापक्षमशिश्रियत् ।
प्राणमत् प्रतिमां जैनीं जयी राज्ञेव मातरम् ॥ १० ॥
तस्य निःशेषशिष्येषु चूडारत्नसमप्रभः ।
अभूत् सकलचन्द्राख्यः श्रीवाचकपुरन्दरः ॥ ११ ॥
कृतोद्वाहार्थसामग्रीमप्यायोज्य व्रतोत्सवे ।
वैराग्यादग्रहीद्दीक्षां सः श्रीजम्बुकुमारवत् ॥ १२ ॥
निपीय भारतीयस्य नाद्रियन्ते बुधाः सुधाम् ।
ते नाकव्याजतश्चन्द्रे संजातः शैवलोदयः ॥ १३ ॥
प्रावर्त्तत यतः सप्तदशभेदजिनार्चनम् ।
जाह्नवीव हिमप्रस्थाज्जगत्कर्तुरिव प्रजा ॥ १४ ॥
प्रतिद्रङ्गं प्रतिग्रामं प्रतिपर्वोत्सवं च यत् ।
कर्त्तुः कीर्त्तिरिवाद्यापि जनैः सर्वत्र गीयते ॥ १५ ॥
निःशेषधीमुषीमुख्याः शिष्या विख्यातकीर्त्तयः ।
बभूवुः शतशस्तस्य हिमाद्रेरिव सूनवः ॥ १६ ॥

तेषां श्रीसूरचन्द्र-श्रीशान्तिचन्द्राभिधौ पुनः ।
मुख्यौ बभूवतुः शिष्यौ ज्योतिषां पुष्पदन्तवत् ॥ १७ ॥
सहस्रार्चिरिवादर्शि सूरचन्द्रस्तु सूरिभिः ।
निजैर्यो धीगुणैर्युक्तं धिकृचक्रे द्वादशार्चिपम् ॥ १८ ॥
विभाव्य प्रतिभां यस्य सर्वशास्त्रावगाहिनीम् ।
प्राज्ञरूपैरिति प्रोचे किमियं कृष्णभारती ॥ १९ ॥
वादार्थं वादिनोऽनेके यत्समीपमुपस्थिताः ।
न वक्तुमपि शक्तास्ते कृतमौनव्रता इव ॥ २० ॥
विस्मयोत्पादिकैः पद्यैरपि सद्यो विनिर्मितैः ।
यः सुधीः पण्डितंमन्यैर्विवादं वादिभिर्व्यधात् ॥ २१ ॥
भानुचन्द्राभिधस्तस्य शिष्यः सौभाग्यभाग्यभूः ।
अभूदन्तिषदां मुख्यः स्वर्नाथः स्वर्गिणामिव ॥ २२ ॥
सोऽनवद्यास्ततो विद्याः स्माधीते गुरुसन्निधौ ।
हार्दं तासां च जग्राहाभिज्ञवन्मुग्धचेतसाम् ॥ २३ ॥
स्फुरत्कलिन्दिकावल्लीमुन्मदिष्णुकुवादिनः ।
जयन् यः सफलीचक्रे वर्षन्निव घनाघनः ॥ २४ ॥
तदा तदाननज्योत्स्नानाथे लवणिमामृतम् ।
चकोरेणेव पिबता नन्दते गुरुचक्षुषा ॥ २५ ॥
प्रीतिवापीपयःपूराप्लवनैः पुलकाङ्किताः ।
ददुः 'प्राज्ञ'पदं तस्य श्रीहीरगुरवः स्वयम् ॥ २६ ॥
कलौ स्वकामिताप्राप्ते लोकानालोक्य सीदतः ।
पूर्णकामाश्चिकीर्षुस्तान् स्वःसुरद्रुमिवागतम् ॥ २७ ॥
स्वोदयाय कलिं लुप्त्वा किमु कर्तुं कृतं युगम् ।
नक्तं दिनमिवादित्यं धर्मं मूर्त्तमिवोद्गतम् ॥ २८ ॥
चतुर्थारकवल्लोकान् पञ्चमेऽप्यारकेऽथवा ।
अवतीर्णमिवोद्धर्तुं कृपया गौतमं पुनः ॥ २९ ॥
तपगच्छश्रिया लीलाललाममिव जङ्गमम् ।
यं सर्वोऽपि जनः स्नेहादैषीदेष निषेवितुम् ॥ ३० ॥—चतुर्भिः कलापकं ॥
वचनागोचरागण्यभाग्यसौभाग्यसेवधिः ।
दीक्षयामासिवानेषोऽनेकानिभ्यतनूभवान् ॥ ३१ ॥
द्विषां भानुरिवासह्यः सतां सौम्यस्तु चन्द्रवत् ।
इति सान्वर्थनामानं भानुचन्द्राभिधं बुधम् ॥ ३२ ॥
शासनोन्नतिरेतस्माद्भाविनीति विभाव्य तम् ।
प्रैषीदकब्बरक्ष्मापसन्निधौ हीरसूरिराट् ॥ ३३ ॥—युग्मम् ॥

प्रमाणीकृत्य तद्वाचं वाचंयमशिरोमणिः ।
अगाल्लाभपुरं प्रीत्या माकन्दं कीरवत् क्रमात् ॥ ३४ ॥
तत्र श्रद्धाधिकैः श्राद्धैः कृतप्रावेशिकोत्सवः ।
कुर्वन् भानुरिवोद्द्योतं स प्रतिश्रयमागमत् ॥ ३५ ॥
ततोऽर्हच्छासनौन्नत्यं कर्त्तुकामः क्रमेण सः ।
श्रीशेखधीसखद्वाराऽमिलद् भूजम्भविद्विपा ॥ ३६ ॥
वशीकृतेन्द्रियग्रामं प्रशान्तरसपूरितम् ।
जगदुद्धृतये धर्ममवतीर्णमिवात्मना ॥ ३७ ॥
अथो निर्ग्रन्थनाथं तं दर्शं दर्शं मुहुर्मुहुः ।
तर्काधीतीव कुरुते वितर्कानिति भूपतिः ॥ ३८ ॥–युग्मम् ॥
अद्वैतानां किमद्वैततयैवैकोऽवतीर्णवान् ।
द्वितीयः किं मृगाङ्को वा तृतीयः किमु नेत्रयोः ॥ ३९ ॥
चतुर्थो वा किमु ब्रह्म चन्द्रचूडमुरद्विपाम् ।
वेदानां पञ्चमः किं वा षष्ठः किं सुरभूरुहाम् ॥ ४० ॥
ऋतूनां सप्तमः किं वा वार्द्धीनां वा किमष्टमः ।
नवमः किं दिगीशानां निधीनां दशमः किमु ॥ ४१ ॥
विष्णोर्दशावताराणामसावेकादशः किमु ।
रुद्राणां द्वादशः किं वा किं वाऽर्काणां त्रयोदशः ॥ ४२ ॥
विश्वविश्वत्रये विश्वदेवानां किं चतुर्दशः ।
किं चतुर्दशरत्नानामयं पञ्चदशोऽथवा ॥ ४३ ॥
शरन्निशीथिनीनाथकलानां किमु षोडशः ।
क्षमाधुन्या धुनीशः किं धियां कोशः किमक्षयः ॥ ४४ ॥
यशःसुमनसः किं वा वृन्दारकमहीरुहः ।
अनेकगुणरत्नानां किं सङ्केतनिकेतनम् ॥ ४५ ॥–सप्तभिः कुलकम् ॥
सोत्साहस्तानिति प्राह पृथिवीपाकशासनः ।
कच्चिज्जागर्त्ति वो वार्त्तं वपुर्नाक्रामति क्लमः ॥ ४६ ॥
नास्ते वस्तपसां बाधः सुप्रसन्नं मनोऽस्ति वः ।
अस्मज्जनपदे धर्मः कच्चिद्वः सुखमेधते ॥ ४७ ॥
इदं निर्दिश्य दिल्लीशे मौनमालम्ब्य तस्थुषि ।
सहस्राक्षैर्मुमुक्षूणामाचचक्षे विशांपतिः ॥ ४८ ॥
परमाप्तवचःश्रेणीसुधापानविधायिनाम् ।
स्वर्गिणामिव नो वार्त्तमस्ति नास्ति पुनः क्लमः ॥ ४९ ॥
इन्द्रियाश्वान् निरीहत्वरज्वा यंत्रयतां स्वयम् ।
प्रवर्त्तन्ते विना विघ्नमनांसीव तपांसि नः ॥ ५० ॥

अर्थानामिह सर्वेषामनित्यत्वादिभावनैः ।
इवाम्भः कतकक्षोदैः सुप्रसन्नं मनोऽस्ति नः ॥ ५१ ॥
त्वय्यासमुद्रमेकातपत्रां धात्रीं प्रशासति ।
धर्मे विघ्नः कुतोऽस्माकं सिंहे गर्जति रङ्कुवत् ॥ ५२ ॥
इत्युक्तियुक्तिमाकर्ण्य महीशक्रश्चमत्कृतः ।
प्रमोदस्य परां कोटिमध्यगादवदत्पुनः ॥ ५३ ॥
भूषयन्तु भवन्तो मे सभां सौभाग्यशालिनः ।
प्रत्यहं त्रिदशावासप्रभोः सप्तर्षिभूरिव ॥ ५४ ॥
स्वयमेव समाहूय प्रोचे दौवारिकं नृपः ।
एते मत्पार्श्वमायान्तस्त्वया वार्या न जातुचित् ॥ ५५ ॥
ध्वनत्स्मरध्वजध्वानपूरिताशेषदिङ्मुखम् ।
प्राप्तश्रीशाहिसंमाना आययुस्ते प्रतिश्रयम् ॥ ५६ ॥
प्रत्यहं ते नृपाभ्यर्णं ततः प्रभृति वव्रजुः ।
निःप्रत्यूहमजायन्त श्रेयःकृत्यानि चाधिकम् ॥ ५७ ॥
अन्येद्युः प्रश्नयांचक्रुस्तानाऽऽहूय सगौरवम् ।
स्वयं व्युत्पित्सवः शेखाः षड्दर्शनसमुच्चयम् ॥ ५८ ॥
तदुक्तं सविशेषं तत् श्रुत्वा श्रीशेखपुङ्गवः ।
प्रोचे श्रीमन्मुखादेव शिक्षणीयमिदं मया ॥ ५९ ॥
प्रारेभे तल्लिपीकर्त्तुं श्रीशेखैः प्रत्यहं ततः ।
तद्दिनादभवत्तेषां प्रीतिः स्फीतिमतां मिथः ॥ ६० ॥
अन्तर्गड्ड स्वकीयस्यावस्थानं वीक्ष्य वाचकैः ।
स्वप्रस्थानकृते शेखाः प्रार्थिताः प्रीतिपूर्वकम् ॥ ६१ ॥
ततः प्रोचे धराधीशं शेखस्तज्जल्पितं रहः ।
कुर्वन्तु ते यथाभीष्टमित्युत्तरमदान्नृपः ॥ ६२ ॥
अद्यप्रभृति मत्पार्श्वे साम्प्रतं ये समागताः ।
रक्षणीयास्त एवेति तमूचे नृपतिः पुनः ॥ ६३ ॥
प्रोचे शेखैस्ततः शान्तिचन्द्रानाहूय सत्वरम् ।
श्रीमतां चलनाज्ञाभूद् भानुचन्द्रास्तु रक्षिताः ॥ ६४ ॥
ततः शेखैरनुज्ञाताः शान्तिचन्द्राः प्रतस्थिरे ।
क्रमेण गूर्जरं देशं प्रापुः प्रथितकीर्त्तयः ॥ ६५ ॥
ततः श्रीशेखसाहाय्यात् श्रेयःकृत्यान्यनेकशः ।
जायन्ते जलसंपर्कात् शश्वत् शस्याङ्कुरा इव ॥ ६६ ॥
नाम्नां सहस्रमन्येद्युर्द्विजातिभ्यो विवस्वतः ।
भूभुजा मार्गितं भूयो न प्राप्तं तैश्च कुत्रचित् ॥ ६७ ॥

भाग्याभ्युदयतस्तेषां मिलितः कोऽपि धीधनः ।
तेन दत्तं तदा तच्चैः श्रीशाहेः प्राभृतीकृतम् ॥ ६८ ॥
तद्वीक्ष्य संमदोद्रेकात् श्रीशाहिस्तानभाषत ।
'अध्येतव्यं मया कस्य सन्निधौ तन्निगद्यताम्' ॥ ६९ ॥
वशीकृतेन्द्रियग्रामो भूशायी ब्रह्मभृच्च यः ।
स एवात्राधिकारी स्यादित्युक्ते शाहिरब्रवीत् ॥ ७० ॥
'युक्ता भवन्त एवात्र भवन्तस्तादृशैर्गुणैः ।
पूज्यैरेव प्रतिप्रातः पाठनीयमिदं मम' ॥ ७१ ॥
इत्युदीर्य विभावर्यां भूपः शुद्धान्तमध्यगात् ।
हर्षोत्कर्षोल्लसद्वक्षा विबुधश्च प्रतिश्रयम् ॥ ७२ ॥
अश्रान्तानन्तपदवीलङ्घनैः श्रान्तवानिव ।
शशी शनैः शनैरस्ताचलचूलामथाऽऽश्रयत् ॥ ७३ ॥
गर्भाश्मगर्भचन्द्राभ(?)कल्पितोत्तंसिकेव सा ।
अस्ताचलश्रीर्भाति स्म मौलिलीलायितेन्दुना ॥ ७४ ॥
चन्द्रश्चङ्क्रमणक्लान्तं स्वाशनायितरोहितम् ।
वनाय मोक्तुमस्ताद्रेरध्यास्त किमधित्यकाम् ॥ ७५ ॥
इनोऽभ्युदयते भानुरितश्चन्द्रोऽस्तमीयते ।
इदं किमप्यनीदृक्षमहो विलसितं विधेः ॥ ७६ ॥
प्रेक्ष्य क्षपाक्षये चन्द्रं विद्राणं चन्द्रगोलिका ।
त्यक्त्वा कान्तं ययौ कापि पुंश्चलीव यदृच्छया ॥ ७७ ॥
तमीप्रियतमो मध्यं मत्यगूद्वीपवतीपतेः ।
जनिकर्तुर्निजस्येव मिलनाय समीयिवान् ॥ ७८ ॥
दत्वोदयं त्वमेवास्तं कथं दत्से प्रियस्य नः ।
तारका इत्युपालब्धुं भेजुरस्ताचलं किमु ॥ ७९ ॥
नक्षत्रपद्धतेः प्रातर्भ्रश्यन्तोऽम्बुधरादिव ।
क्षणाद्विलयमासेदुस्तारका करका इव ॥ ८० ॥
निशाशनायितेनाभ्रपथे तारकतन्दुलाः ।
दिनाननशकुन्तेन शंके कुक्षिमतीकृताः ॥ ८१ ॥
गह्वरे भूभृतां गुप्तं तामसास्तापसा इव ।
कृशाः किमु तपस्यन्ति पुनरभ्युदयाशया ॥ ८२ ॥
रजनीवियुजां जाने द्विजानामपशापतः ।
कैरवाक्षी क्षणाद्राज्ञः क्षीणतां प्रतिपेदुषी ॥ ८३ ॥
संसिसृक्षुः शशी कान्तां काममादनुरागवान् ।
इत्यालोकयितुं शंके तमी तमनुजग्मुषी ॥ ८४ ॥

तमसिन्या विधोः पत्युर्विरहासहमानया ।
प्रातःसन्ध्या बृहद्भानौ स्वतनुः किमहूयत ॥ ८५ ॥
उपभुज्य प्रियां प्राचीं वज्रिणा व्रजता दिवम् ।
व्युत्सृष्टमिव ताम्बूलं शोणिमा प्रातरुद्ययौ ॥ ८६ ॥
सन्ध्यारागारुणं जैनं पदं प्रातर्व्यजायत ।
अपूजि निर्जरैर्भक्तिप्रह्वैः किं कुङ्कुमद्रवैः ॥ ८७ ॥
अथो पाथोजिनीनाथोऽभ्युदियाय नभोऽङ्गणे ।
कपोलकुङ्कुमक्लिन्नं प्राच्याः किं कर्णकुण्डलम् ॥ ८८ ॥
द्यावाभूमीपराभूण्णं भूछायामरवैरिणम् ।
भेत्तुं व्यमोचि चण्डांशुचक्रं किं चक्रपाणिना ॥ ८९ ॥
शोणादीप्तिर्दिनेशस्याधाकुमारितराश्रियम् ।
कोकैर्दुःखानलज्वाला किमुद्गीर्णा सुहृत्पुरः ॥ ९० ॥
निजानुरागिणीर्वीक्ष्य दारान् स्मेरसरोजिनीः ।
किमुद्गीर्णोऽरुणज्योतीरागो राजीवबन्धुना ॥ ९१ ॥
कुर्व्वन्निव गिरेः शृङ्गे गैरिकावनिविभ्रमम् ।
ताम्बूलश्रियमास्येषु दिग्वधूनां दिशन्निव ॥ ९२ ॥
सीमन्तेषु मृगाक्षीणां सिन्दूरं पूरयन्निव ।
प्रातः प्रस्तारयन् भाति भानुमान् भानुविभ्रमम् ॥ ९३ ॥—युग्मम् ॥
वैतालिककलध्वानकृतनिद्रावधिस्ततः ।
सोऽपि तल्पात्समुत्तस्थौ मराल इव पङ्कजात् ॥ ९४ ॥
प्रारेभे भानुना व्योम्नि क्रमाच्चङ्क्रमणक्रमः ।
शाहिनापि प्रबुद्धेन बहिरागमनक्रमः ॥ ९५ ॥
नृपोऽम्बरलसल्लक्ष्मीः कुवार्णः कमलोदयम् ।
सिंहासनमलंचक्रे पूर्वाद्रिमिव भानुमान् ॥ ९६ ॥
इतो निःस्वाननिर्घोषैः शब्दाद्वैतं प्रसर्प्पति ।
इतः सर्वत्र धावन्ति प्रतीहारास्तु लक्षशः ॥ ९७ ॥
इतो यष्टिमवष्टभ्य स्थिताः सामन्तपार्थिवाः ।
वीक्षितुं लक्षशो लोका इतश्चायान्ति यान्ति च ॥ ९८ ॥
इतो गायन्ति गन्धर्वाः सुस्वरा इव किन्नराः ।
दर्शिताभिनया नृत्यं कुर्वते नर्त्तका इतः ॥ ९९ ॥
इतश्च वन्दिनो वाढं पठन्ति बिरुदावलीः ।
मुष्टामुष्टि मिथो मल्ला इतो युद्ध्यन्ति दुर्द्धराः ॥ १०० ॥
इतश्चाभ्रंलिहैः केतुव्रजैराच्छादितं नभः ।
इतो देशान्तरायातभूपाः प्राभृतपाणयः ॥ १०१ ॥

इतस्तुङ्गा भ्रमद्भृङ्गाः क्वचिद् वल्गन्ति दन्तिनः ।
इतो धावन्महाव्यालजातकोलाहलः क्वचित् ॥ १०२ ॥
इतो दासेरकारब्धयुद्धस्तब्धस्थितो जनः ।
प्रचण्डाः पर्वतप्राया इतो गर्जन्ति दन्तिनः ॥ १०३ ॥
भ्रमद्व्याघ्रव्रजक्ष्वेडात्रासिता जनता इतः ।
इत उच्चैःश्रवःप्रख्या हेषन्ते हर्षिता हयाः ॥ १०४ ॥
इत्थमाविर्भवन्नैककौतुकाकृष्टमानसः ।
अकब्बरमहीशस्य राजलोको व्यराजत ॥ १०५ ॥
नाम्नां सहस्रमध्येतुमुद्यतस्तिग्मरोचिषः ।
विस्मृतान्यरसस्तत्र श्रीशाहिस्तानजूहवत् ॥ १०६ ॥
भक्तिप्रह्वमनाः सम्यग् रवेरभिमुखः स्थितः ।
अध्यगीष्ट मुखात्तेषां मूर्द्धबद्धाञ्जलिस्ततः ॥ १०७ ॥
पाठनात् प्रत्यहं प्रातः प्रभूणां प्रौढपर्षदि ।
शुभोदर्कः प्रतापार्कः श्रीगुरूणामदीप्यत ॥ १०८ ॥
ततः स्फीतिमती जज्ञे तीर्थकृच्छासनोन्नतिः ।
ननर्त्त श्रीगुरोः कीर्त्तिर्नटीव भुवनत्रये ॥ १०९ ॥
अन्येद्युस्ते नृपं प्रोचुर्दीनानुद्धर्त्तुमित्सवः ।
अष्टाह्निकादिने दानं दत्तं शतगुणं भवेत् ॥ ११० ॥
तदाकर्ण्याब्रवीद्भूमानौपवस्त्रं विधाय तत् ।
दुःखितेभ्यः प्रदातव्यं मया स्वर्णादिकं महत् ॥ १११ ॥
ततः स्नात्वा सभासीनः श्वेतवस्त्रविभूषितः ।
दीनेभ्यः स्वर्णमुद्राणां षट्सहस्रीमदत्त सः ॥ ११२ ॥
साग्रहं स्वर्णमुद्रां तां दीयमानां महीभुजा ।
न लल्ुस्ते ततस्तेनाज्ञायि यन्निःस्पृहा इमे ॥ ११३ ॥
तदैवाजीजकोकानामिति विज्ञप्तिरागमत् ।
आजौ जामं विनिर्जित्य गृहीतस्तज्जनोऽखिलः ॥ ११४ ॥
तन्निशम्योल्लसद्दर्पप्रकर्षाकुलितः प्रभुः ।
श्रीगुरून् व्याजहारार्हं पूर्णपात्रं प्रगृह्यताम् ॥ ११५ ॥
लब्धलक्ष्यैः स तैः प्रोचे मुच्यतामनुगृह्य माम् ।
प्रसन्नीभूय सौराष्ट्रराष्ट्रबन्दीकृतो जनः ॥ ११६ ॥
इतो बन्दीजनाः सर्वे मद्विपद्देशवर्त्तिनः ।
इतश्चैषां महापुंसां दाक्षिण्यमतिदुस्त्यजम् ॥ ११७ ॥

---

१ उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते । वस्त्रमाल्यादि तत्पूर्णपात्रं पूर्णानकं च तत् ॥ १ ॥–टिप्पणी ।
२ अवगरसैः ।–टिप्पणी ।

इत्यालोच्य क्षणं तस्थौ धरित्रीरमणः स्वयम् ।
मा भवत्प्रार्थनाभङ्गो विमृश्येत्यवदत् पुनः ॥ ११८ ॥
मोचनं बन्दिवृन्दानां कियन्मात्रमिदं पुनः ।
भवत्प्रार्थनया सर्वः सौराष्ट्रोऽपि प्रदीयते ॥ ११९ ॥
तस्मिन्नेव क्षणे तेषां बद्धबन्दिविमुक्तिकृत् ।
सौवमुद्राङ्कितं कृत्वा स्फुरन्मानं स दत्तवान् ॥ १२० ॥
ते च तत्प्रेषयांचक्रुर्गुरोर्गुर्जरमण्डले ।
स्वीयं च सर्वदेशेषु शरच्चन्द्रोज्ज्वलं यशः ॥ १२१ ॥
इतो लाभपुरद्रङ्गे नासीत्पूर्वं प्रतिश्रयः ।
इति व्यचिन्तयच्चित्तेऽन्यदा ते तच्चिकीर्षवः ॥ १२२ ॥
म्लेच्छा मिथ्यादृशश्चान्येऽप्यस्मद्धर्मद्विषो यतः ।
कर्तुं शक्यो विना शक्तिं ततो नात्र प्रतिश्रयः ॥ १२३ ॥
अत्रार्थे किमु कर्त्तव्यमित्युपाये कृताशयाः ।
ययुः श्रीमत्सुरत्राणाध्यापनाय चिरेण ते ॥ १२४ ॥
महीन्द्रस्तांश्चिराऽऽयातान् गुरून् न्यजीगदत्ततः ।
चिरेणाद्यागतास्तत्र किं निदानं निगद्यताम् ॥ १२५ ॥
विस्तीर्णेऽपि पुरे दूरे स्थानं सङ्कीर्णमस्ति नः ।
तत्रापि तन्न चात्मीयं नानुकूलश्च तत्पतिः ॥ १२६ ॥
तच्चिन्ताव्याकुलस्वान्ततयैवाद्य स्थितश्चिरम् ।
तेषामित्युक्तमाकर्ण्य पूर्णप्रेमाऽवदन्नृपः ॥ १२७ ॥
सुधोज्ज्वलानि सौधानि रम्यहर्म्याणि चाश्रमाः ।
सन्ति मे यद्भवद्योग्यं स्थानं तत् प्रतिगृह्यताम् ॥ १२८ ॥
विभाव्येत्यात्मनीनं तन्नायतौ ग्रहणं यतः ।
ततस्तैस्तत्कृते भूमिः प्रार्थिता भूभुजः पुरः ॥ १२९ ॥
तदा तां तद्वचो भूमानुरीकृत्य प्रदत्तवान् ।
प्रारब्धश्च ततः संघैर्मध्येद्रङ्गं प्रतिश्रयः ॥ १३० ॥
शनैः शनैर्वर्द्धमानः प्रत्यहं तन्मनोरथैः ।
क्रमेण पूर्णतां प्राप शुक्लपक्षे शशीव सः ॥ १३१ ॥
यस्मिन्नभ्रंलिहैः शृङ्गैः स्फटिकोपलनिर्मितैः ।
इत्याशङ्किष्ट पुर्लोकः किमसौ स्फटिकाचलः ॥ १३२ ॥
तारासु तन्दुलभ्रान्त्या यदुच्चैः शिखरस्थिताः ।
तुण्डं ताण्डवयामासुर्मुग्धाः सर्वेऽपि पत्रिणः ॥ १३३ ॥
शातकुम्भमयैर्यत्र कलशैः शिखरस्थितैः ।
अशङ्कि विस्मितैर्लोकैः शतसूर्यं नभस्तलम् ॥ १३४ ॥

श्रीशान्तिस्वामिनश्चैत्यं तन्मध्ये च विनिर्ममे ।
तथैवोद्भासितं स्वर्णकलशैरुल्लसद्ध्वजैः ॥ १३५ ॥
प्रासादमौलिमारुह्य नृत्यन्त्याः सुकृतश्रियः ।
लोलं हस्तमिव प्रेक्ष्य तद्ध्वजं मुमुदे जनः ॥ १३६ ॥
तच्चारुतोरणस्तम्भभाजो वन्दनमालिकाः ।
लक्ष्म्याः स्वभावलोलायाः केलिदोलाकलां ललुः ॥ १३७ ॥
चतुर्विधस्य सङ्घस्यानेकधा धर्मकर्मभिः ।
तत्रैकं छत्रमालोक्य साम्राज्यं धर्मभूपतेः ॥ १३८ ॥
मनोरथतरुर्जज्ञे श्रीगुरूणां फलेग्रहिः ।
तत्प्रत्यूहकृतां तत्रावकेशी कुदृशां पुनः ॥ १३९ ॥—युग्मम् ।

* * *

अन्यदा मूलनक्षत्रे वृद्धसूनोर्महीभुजः ।
अभूत्तस्य कृपासिन्धोर्दुहिता दैवयोगतः ॥ १४० ॥
तत्पितुः किंचिदादिष्टं कष्टं शिष्टजनैस्ततः ।
आहूय श्रीगुरून् प्रोचे श्रीशाहिः संसदि स्थितः ॥ १४१ ॥
विघ्नध्वंसकृते कश्चित्प्रतीकारो विधीयताम् ।
महीशस्तैरिति प्रोचे ततस्तद्विघ्नशान्तये ॥ १४२ ॥
अष्टोत्तरशतस्नात्रविधानाज्जिनमंदिरे ।
विघ्नाः सर्वे विलीयन्ते तामसास्तरणेरिव ॥ १४३ ॥
जगाद जगतीजानिः प्रसन्नवदनस्ततः ।
त्वर्यतां त्वर्यतामत्र विलम्बो नैव युज्यते ॥ १४४ ॥
द्रष्टुकामो भवत्स्नात्रविधिं युष्मदुपाश्रये ।
अहमप्यागमिष्यामि शेखूजीसहितः स्वयम् ॥ १४५ ॥
तत्कृत्यकरणादेशः श्रीशाहेर्गुरुभिस्तदा ।
योग्योऽयमिति विज्ञाय थानसिंहस्य दापितः ॥ १४६ ॥
लम्भमानैर्मणिमुक्ताजालैः स्वर्णांशुकैः पुनः ।
अथैत्य थानसिंहस्तं प्रतिश्रयमभूषयत् ॥ १४७ ॥
शिल्पिभिः कारितस्तत्र मण्डपश्च महीभुजः ।
श्रेयःश्रियं वरीतुं किं स्वयंवरणमण्डपः ॥ १४८ ॥
एतद्व्यतिकरेऽनेककौतुकालोकलालसा ।
त्रिलोकी चित्रदम्भेन मण्डपे किमुपेयुषी ॥ १४९ ॥
विस्तीर्णोऽपि स सङ्कीर्णो बभूवानेकनागरैः ।
भाविश्रीवाचकागण्यपुण्याकृष्टैरिवागतैः ॥ १५० ॥

निशि तारैरिवाकाशो भ्रियमाणः स निर्भरम्।
सन्महोमिलितै रेजे पौरैर्जानपदैर्जनैः ॥ १५१ ॥
इतः खरतरश्राद्धमुख्यो मान्यश्च भूभुजाम् ।
तत्कृते कर्मचन्द्रोऽपि प्रेषितस्तत्र शाहिना ॥ १५२ ॥
वाद्यमानमहावाद्यरवैः पूरितदिक्पथः ।
चतुरङ्गचमूचक्रभारैराक्रान्तभूतलः ॥ १५३ ॥
पदातीभूतसामन्तपार्थिवैः परिवेष्टितः ।
अथो महीमहेन्द्रोऽपि स्वयं तत्र समीयिवान् ॥ १५४ ॥–युग्मम् ।
उत्क्षिप्यमाणराजार्हधूमव्याप्तघनाश्रयम् ।
श्रेयःपात्रं व्यधुः स्नात्रं थानसिंहादयस्ततः ॥ १५५ ॥
श्रीशेखूजीजुषः शाहेस्तस्थुषः श्रीजिनाग्रतः ।
भक्तामरमहास्तोत्रमश्रावि गुरुभिः स्वयम् ॥ १५६ ॥
अथो गर्भगृहात् शाहिरागमद्रङ्गमण्डपम् ।
प्राग्गिरेः कन्दरक्रोडाद्भास्वानिव नभोऽङ्गणम् ॥ १५७ ॥
शाहिश्च शाहिजातश्च तस्थिवांसौ गुरोः पुरः ।
तत्र शोभां लभेते स्म सूर्याचन्द्रमसाविव ॥ १५८ ॥
इतस्तत्र कृतस्नात्रः स्थानसिंहः शुभाशयः ।
गजांश्च तुरगान् रम्यान् पुरः शाहेरढौकयत् ॥ १५९ ॥
त्रयोदशशतस्वर्णमुद्राणां मौक्तिकस्रजम् ।
मंत्रीशः शाहिजातस्य कर्मचन्द्रोऽप्यढौकयत् ॥ १६० ॥
प्रत्येकं ढौकयांचक्रुरन्येऽपि श्राद्धपुङ्गवाः ।
नानास्वर्णाम्बरस्वर्णभूषणानि यथोचितम् ॥ १६१ ॥
ततः स्नात्रजलं स्वर्णपात्रस्थं प्रीतिपूर्वकम् ।
निधाय नेत्रयोः पश्चात्प्रैषीदन्तःपुरे नृपः ॥ १६२ ॥
इतो जयजयारावं पेठुर्मङ्गलपाठकाः ।
नृत्यं वितेनिरे वारवध्वो देव्य इवागताः ॥ १६३ ॥
चक्रिरे स्वस्तिकश्रेणीं मौक्तिकैः सधवाः स्त्रियः ।
बबन्धुश्चाम्रपत्राणां तोरणानि च मालिकाः ॥ १६४ ॥
अवाद्यन्त पुनर्वीणामृदङ्गाद्या सरध्वजाः ।
ययाचे याचकश्रेणी दत्ताः कासरिहस्तकाः ॥ १६५ ॥
इत्थं स्नात्रोत्सवे तस्मिन् शुशुभे संप्रतिश्रयः ।
स्कन्धावार इव प्रौढप्रमोदाभिधभूपतेः ॥ १६६ ॥
इवाब्दः स्वर्णधाराभिर्वर्षन् हर्षप्रकर्षतः ।
अथो पृथ्वीपतिः प्रापदनुज्ञाप्य गुरून् गृहे ॥ १६७ ॥

ततः स्वश्रेयसः श्रेणीवल्ली विस्तारमीयुषी ।
शाहेश्च शाहिजातस्य बभूव नवपल्लवा ॥ १६८ ॥

ॐ ॐ ॐ

अन्यदानन्यराजन्यपूर्णायां पर्षदि स्थितम् ।
गुरवोऽध्यापयांचक्रुः प्रातः पृथ्वीपुरन्दरम् ॥ १६९ ॥
मुहुर्मुहुर्महानन्दपीयूषलहरीमिव ।
प्रसन्नां श्रीगुरोर्मूर्तिं दर्शं दर्शं जहर्ष सः ॥ १७० ॥
मुखाब्जविलसद्वाणीं रणन्नूपुरहारिणीम् ।
उज्जगार गिरं कर्णसुधां स वसुधाधवः ॥ १७१ ॥
युष्माकं संप्रदायेऽस्मिन् समग्रगुणशालिनाम् ।
सार्वभौममिवास्माकं किमुत्कृष्टतरं पदम् ॥ १७२ ॥
अस्त्याचार्यपदं मुख्यमुपाध्यायपदं पुनः ।
तेषामित्युक्तमाकर्ण्य भूयो भूमानजीगदत् ॥ १७३ ॥
परभागवतां तत्रभवतां भवतां पुनः ।
प्रोक्तयोरनयोर्मध्ये किमास्ते तन्निगद्यताम् ॥ १७४ ॥
गुर्वायत्ततयाऽस्माकमवस्थानाच्च दूरतः ।
अप्येकमनयोर्नैवास्माकमद्याप्यजायत ॥ १७५ ॥
तन्निशम्यावदद्भूमान् भूयोभूयं कृताग्रहः ।
तर्हि दत्तं तदस्माभिराचार्यपदमस्तु वः ॥ १७६ ॥
तदाचार्यपदं नैवास्माकमौचित्यमश्नुति ।
तज्जुषः सन्ति तद्योग्या यतः श्रीहीरसूरयः ॥ १७७ ॥
इत्यालोक्य नृपस्तेषां निःस्पृहत्वमलौकिकम् ।
अजोषिष्ट समज्यायामस्तवीच्च पुनः पुनः ॥ १७८ ॥
अन्येद्युः सर्वभूपश्रीहृतिदूतीभवन्मतिः ।
उपाध्यायपदं तेषां शेखः शाहेरदापयत् ॥ १७९ ॥
महेन महतोपेत्य स्वयमेव प्रतिश्रयम् ।
श्राद्धान् सर्वान् समाहूय तच्च सर्वमचीकथत् ॥ १८० ॥
तद्वचःश्रवणात्ते च प्रमोदभरमेदुराः ।
ननृतुर्जलदध्वानादिव सर्वेऽपि केकिनः ॥ १८१ ॥
अथौचित्यविदां मुख्यैस्तैरभाषीति धीसखः ।
पारंपर्यागतास्माकं रीतिरेषैव वर्त्तते ॥ १८२ ॥
पदप्रदानप्रभृतिगुर्वायत्तं न चान्यतः ।
लिखित्वा तन्नृपादिष्टं ज्ञाप्यमस्मद्गुरोरिदम् ॥ १८३ ॥

श्रीशेखस्तच्चिकीः शाहेः स्फुरन्मानमलीलिखत् ।
श्रीगुरोः प्रेषयांचक्रे राजधन्यपुरे पुनः ॥ १८४ ॥
आकलय्य प्रमेयं तत् स्फुरन्मानान्तरस्थितम् ।
प्रमाणीकृत्य सल्लेहं श्रीशाहेरनुशासनम् ॥ १८५ ॥
वासं प्रतिष्ठितं प्रेष्य श्रीहीरगुरवः स्वयम् ।
लेखद्वारा ततस्तेषामुपाध्यायपदं ददुः ॥ १८६ ॥–युग्मम् ।
यत्कीर्त्तिं नरनिर्जरोरगवधूप्रारब्धनूतस्तुतिं
श्रुत्वाऽस्यामनुरागितां त्रिभुवने विभ्रत्यदभ्रां हृदा ।
शर्वाणीरमणस्तदश्रवणतो मूर्द्धस्थसिद्धापगां
कुर्वाणां बधिरत्वमुद्धतरवैस्तारं गर्जैर्गर्हति ॥ १८७ ॥

इति श्रीतपागच्छे पातिसाहिश्री अकब्बरप्रतिबोधदायक महोपाध्यायश्री ५ श्रीभानुचन्द्रगणिप्रभावकपुरुषचरिते पण्डितश्रीहानर्षिगणिप्रभृतिपट्टपरम्पराप्रादुर्भावनश्रीशाहिमिलनसूर्यसहस्रनामाध्यापनाष्टोत्तरशतस्नात्रविधापनप्रतिश्रयागमनोपाध्यायपदप्रदापनादिवर्णनो नाम द्वितीयः प्रकाशः ।

## ॥ तृतीयः प्रकाशः ॥

अथो यथाजनिष्ट श्रीसिद्धाद्रेः करमोचनम् ।
तथोच्यते यतो न स्यादायतौ संशयो नृणाम् ॥ १ ॥
ज्ञानं विना परोदन्तः सम्यग् ज्ञातुं न शक्यते ।
जाह्नवी वदेकोऽपि शतधा भिद्यते हि सः ॥ २ ॥
अन्यदोर्वीपतिः प्रातः पर्षदि प्रौढविक्रमः ।
बद्धमूर्द्धाञ्जलिक्ष्मापसहस्रैः सेवितक्रमः ॥ ३ ॥
मौक्तिकश्रेणियुक्तेन सितच्छत्रेण शोभितः ।
शशिनेव सपर्यार्थमागतेन समं ग्रहैः ॥ ४ ॥
चलैश्चन्द्रोज्ज्वलैश्चारुचामरैः कृतविभ्रमः ।
जाह्नवीयैरिवाजिह्मैः प्रवाहैस्तुहिनाचलः ॥ ५ ॥
अदूष्यदूष्यभृन्मुक्तदूषणः स्फारभूषणः ।
सुरेन्द्र इव शैलेन्द्रं सिंहासनमशिश्रियत् ॥ ६ ॥–चतुर्भिः कलापकम् ।
इतः सप्रश्रयं द्वाःस्थ इति प्रणयगदन्नृपम् ।
कश्मीरादागतं कश्चिद् द्वारि तिष्ठति वारितः ॥ ७ ॥
आदिदेश विशामीशो मुच्यतां मुच्यतां हि सः ।
अथौत्सुक्यादगादेप सहर्पः पर्पदन्तरे ॥ ८ ॥
स सभ्रान्तः सभासद्भिः क्वचिन्नीलाश्मकुट्टिमे ।
जलभीत्योद्धरन् वासः सहासमवलोकितः ॥ ९ ॥
आकाशस्फटिकस्तम्भसवलितांगतया क्वचित् ।
अन्यत्रापि चचारासौ न्यस्तहस्तः पुरः पुरः ॥ १० ॥
रत्नस्तम्भमालम्बि प्रतिबिम्बमवेक्ष्य सः ।
कृच्छ्रेण जज्ञे विज्ञोऽपि तत्त्वतः पृथिवीपतिम् ॥ ११ ॥
नमस्कृत्य नृपं पुञ्जीभूतहारः स भूतले ।
वेत्रिविज्ञापितस्थाने तस्थावूर्द्धंदमस्ततः ॥ १२ ॥
नृपस्तं प्रत्यभाषिष्टाम्भोदगम्भीरया गिरा ।
अभ्युपेतो मदभ्यर्णं किमुद्दिश्य प्रकाश्यताम् ॥ १३ ॥
जगद्गीतगुणग्रामं पूर्वं कर्णातिथीकृतम् ।
अथो दृग्विषयीकर्तुं साक्षात्त्वामभ्युपागमम् ॥ १४ ॥
इत्याकर्ण्य पुनर्लब्धवर्णः प्रणयगदन्नृपः ।
कश्मीरे किमिवाश्चर्यं दृष्ट्वा त्वं दृष्टवानसि ॥ १५ ॥
प्रालेयधवलैः शैलैर्विशालैरुज्ज्वलः क्वचित् ।
विभ्रमस्तमरैर्युष्मद्यशो[भि]रिव सर्वतः ॥ १६ ॥

प्रफुल्लैः पिञ्जरीभूतः क्वचित्कुङ्कुमभूरुहैः ।
रक्तैरुद्यत्प्रतापैस्ते पिण्डीभूय स्थितैरिव ॥ १७ ॥
स्थाने स्थाने लसल्लक्ष्मीः प्रफुल्लैः पङ्कजव्रजैः ।
त्वन्मुखाम्भोरुहश्रीभिर्जितैस्तत्र स्थितैरिव ॥ १८ ॥
युष्मन्मुखमिव ब्रह्मपुत्र्या प्रत्यक्षमाश्रितः ।
देश एवायमाश्चर्यमयः सर्वोऽपि किं ब्रुवे ॥ १९ ॥—चतुर्भिः कलापकम् ।
तन्निशम्य स तच्चेता जज्ञे तद्दर्शनोत्सुकः ।
विशिष्य धीसखैः शेखमुख्यैरुत्साहितः पुनः ॥ २० ॥
अथ प्रास्थानिके लग्ने कृतप्रस्थानमङ्गलः ।
चचाल क्ष्मापतिर्दिश्युत्तरस्यामुग्रशासनः ॥ २१ ॥
नेदुस्तदा रिपुप्राणप्रयाणपटहोपमाः ।
निःस्वाननिकराः शब्दैरुदरंभरयो दिशाम् ॥ २२ ॥
चेले समन्ततस्तेन सामन्तैश्च समं ततः ।
सितांशुनेव नक्षत्रैः स्फुरत्तेजोमयात्मभिः ॥ २३ ॥
अथ प्रतस्थे वेगेन हास्तिकं गर्जितोर्जितम् ।
प्रत्यर्थिक्षितिभृत्तेजोदाववारिदमण्डलम् ॥ २४ ॥
संसिच्य मदपाथोभिः संवीक्ष्य श्रुतिमारुतैः ।
करिणः कम्पयामासुः शीतार्तामिव मेदिनीम् ॥ २५ ॥
मारुतस्य मुखे धूलिं क्षिपद्भिश्चरणोद्धताम् ।
तरङ्गैरिव पाथोधिस्तुरङ्गैः(°रगैः)श्चलितं तदा ॥ २६ ॥
निजानाकारयन्तोऽथ कारयन्तो गतेर्जवम् ।
ध्वजाञ्चलैश्चलैश्चेलुः समेनैव पथा रथाः ॥ २७ ॥
प्रभुप्रदत्तसद्दूष्ये वसन्तः शेखसन्निधौ ।
अत्याग्रहवशात् शाहेर्गुरवोऽपि प्रतस्थिरे ॥ २८ ॥
स्थिरामस्थिरयद् वेगात् तच्चचाल बलं तदा ।
उच्चधूलिभरैरब्धिं गम्भीरमगभीरयत् ॥ २९ ॥
गाम्भीर्यं दर्शयन्तोऽपि तदा सैन्यैः कदर्थिताः ।
तत्कालं कलयामासुः कलुषत्वं जलाशयाः ॥ ३० ॥
क्रमेण भम्भरोपान्ते वीक्ष्य सैन्यं श्रमाकुलम् ।
दिनानि कतिचित्तस्थौ तद्विश्रान्तिकृते नृपः ॥ ३१ ॥
विमलाद्रिमहातीर्थमात्मसात्कर्तुमुद्यतैः ।
कृताः खरतरैस्तत्रोपायाः प्रच्छन्नवृत्तिभिः ॥ ३२ ॥
ज्ञात्वा गुरुभिरप्येवं विज्ञप्तः शेखधीसखः ।
अस्माकं पुण्डरीकाख्यं तीर्थमेते जिघृक्षवः ॥ ३३ ॥

अथातर्कित एवासौ प्रतस्थे भूपतिस्ततः ।
तथैव गुरवश्चेलुस्तस्थुस्तत्रैव ते पुनः ॥ ३४ ॥
पर्वतान् रत्नपञ्चाल-पीरपञ्चालसंज्ञितान् ।
बहूनुल्लङ्घयन्मार्गे प्राप श्रीनगरं प्रभुः ॥ ३५ ॥
आगतेऽर्कदिने प्रातस्तन्नामाध्यापनादनु ।
विज्ञप्तिविषयीचक्रुर्गुरवस्तं विशांपतिम् ॥ ३६ ॥
अस्ति शत्रुञ्जयस्तीर्थं देशे सौराष्ट्रनामनि ।
तद्यात्रां कर्त्तुमनसः सन्ति श्रीहीरसूरयः ॥ ३७ ॥
भागधेयस्तदध्यक्षैर्गृह्यते प्रतिमानुपम् ।
प्रसद्य प्रीणनीयास्ते प्रभुभिस्तद्विमोचनात् ॥ ३८ ॥
श्रीगुरूक्तं तदाकर्ण्य समस्दीनेति विश्रुतम् ।
खानाजमसुतं ज्येष्ठं व्याजहारेति भूविभुः ॥ ३९ ॥
श्रीगुरौ हीरसूरीन्द्रे तत्र यात्रार्थमागते ।
श्रद्धावतां न केषाञ्चिद्ग्राह्यं शुल्कमतः परम् ॥ ४० ॥
मदुक्तोदन्तसंयुक्तं पत्रं सौवपितुस्त्वया ।
भानुचन्द्रमुनीन्द्राय लिपीकृत्य प्रदीयताम् ॥ ४१ ॥
इत्युक्त्वा तं गतः शाहिः शुद्धान्तं सोऽपि तत्क्षणात् ।
तल्लिखित्वा ददौ तेषां तैः पुनः प्रेषितं गुरोः ॥ ४२ ॥
अथो खरतरैरीर्ष्याभरैस्तत्क्षन्तुमक्षमैः ।
विभुर्विज्ञपयांचक्रे दीनैर्दीनतरैः स्वरैः ॥ ४३ ॥
युष्मत्सेवैकचित्तानां नित्यमाशीर्विधायिनाम् ।
देव ! शत्रुञ्जयस्तीर्थं दीयतामनुगृह्य नः ॥ ४४ ॥
कुत्रास्ति बत तत्तीर्थमित्यूचे यावता नृपः ।
श्रीशेखस्तावताऽकस्मादित्याख्यदसमंजसम् ॥ ४५ ॥
भूरिशुल्कागमात्तत्र भूयान् लाभोऽस्ति भूभुजाम् ।
तन्निशम्य विमृश्यान्तः किञ्चिदित्याह तं नृपः ॥ ४६ ॥
मुनीनामात्मनीनां तत्र यात्रार्थमीयुषाम् ।
न ग्राह्यं शुल्कमित्युक्त्वा शाहिः शुद्धान्तमीयिवान् ॥ ४७ ॥
तत्तीर्थमात्मसात्कर्त्तुं प्रत्यहं गुरवस्ततः ।
प्रारेभिरे वरीवस्यां श्रीशेखस्य विशेषतः ॥ ४८ ॥
अथ तत्रास्ति कासारः पारावार इवापरः ।
जैनलङ्काभिधः कश्चित्पञ्चाशत्क्रोशविस्तृतः ॥ ४९ ॥

तद्दिदृक्षोत्सुकः सत्रा सामन्तैर्गुरुभिश्च सः ।
यानपात्रस्थितस्तत्र प्रस्थितो वारिवर्त्मना ॥ ५० ॥
अन्यः सैन्यजनः सर्वः प्राचालीत्तत्तटाध्वना ।
एकेनैव दिवा शाहिर्जैनलङ्कामुपागमत् ॥ ५१ ॥
स देशः सर्वदेशेषु प्रकृत्यैवास्ति शीतलः ।
तत्रापि वर्त्तते पद्माकरस्त्वेष विशेषतः ॥ ५२ ॥
यत्रावश्यमवश्यायवृष्टिरुच्चैः प्रजल्पतः ।
न चात्र संशयोऽद्राक्षं तामहं स्वदृशा यतः ॥ ५३ ॥
हिमान्युद्रेकतस्तेन भूधना अपि जज्ञिरे ।
तत्र सर्वेऽपि शीतार्त्ताः का कथा तु तपस्विनाम् ॥ ५४ ॥
तदन्तःसौधमासाद्य भूपतिः सपरिच्छदः ।
नानाफलरसास्वादैराददे जन्मनः फलम् ॥ ५५ ॥
अतिशैत्यवशात्प्रातः परिम्लानतरान् गुरून् ।
दर्शं दर्शं दृशा क्ष्मापः सौवाभ्यर्णमजूहवत् ॥ ५६ ॥
सहासवचनोल्लेखैर्भूपतिस्तानभाषत ।
अन्यैर्लेभे फलास्वादः शीतास्वादस्तु वोऽभवत् ॥ ५७ ॥
प्रौढपर्षत्स्थिता [ः] सूर्यनामाध्यापनतः परम् ।
लब्धलक्षास्तदा तं ते संप्राप्यावसरं जगुः ॥ ५८ ॥
जनाः सर्वेऽपि युष्माभिरर्थिनोऽप्यर्थिनः कृताः ।
अहं चैकस्तथैवास्थां यन्नासं किञ्चिदीहितम् ॥ ५९ ॥
यतः–त्वयि वर्षति पर्जन्य ! सर्वेऽपि पल्लविता द्रुमाः ।
अस्माकमर्कपत्राणां पूर्वपत्रेऽपि संशयः ॥ ६० ॥
उत्तुङ्गो सरलतरू फलभरभारेण नमिअसव्वंगो ।
खुज्जो फलं न पावइ ता किं दोसो तरुवरस्स ॥ ६१ ॥
तन्निशम्यावदद्भूमान् वदान्यत्वेन लज्जितः ।
प्रार्थयध्वं यदिष्टं स्यात् तत् प्रयच्छाम्यहं पुनः ॥ ६२ ॥
त्यक्तसावद्ययोगानां भैक्ष्यमात्रोपजीविनाम् ।
नार्थः केनापि नः किन्तु शुल्कं तीर्थस्य मुच्यताम् ॥ ६३ ॥
द्रव्योपलब्धिर्महती तत्रेत्युक्तवति प्रभौ ।
अवोचन् गुरवस्त्वेतत् सर्वशुल्कपुरः कियत् ॥ ६४ ॥
विहस्येषत्ततः शेखधीसखं शाहिरादिशत् ।
पत्रं कृत्वाऽर्प्यतामेषां तत्तीर्थकरमुक्तिकृत् ॥ ६५ ॥
विज्ञप्तिं कृतवन्तस्ते यतः शाहेः पुनः पुनः ।
अतः स शेखस्तन्नाम्ना तल्लिपीकर्तुमुद्यतः ॥ ६६ ॥

केनाप्यकृतपूर्वं तन् महत् कार्यमभूद्यतः ।
अतः श्रीहीरसूरीणां नाम्नैवालेखयन् स्वयम् ॥ ६७ ॥
तत्समक्षं लिपीकृत्य तत् प्रदर्श्य महीभुजे ।
तन्मुद्रां कारयित्वा च तेषामर्पितवांश्च सः ॥ ६८ ॥
तैः पुनस्तन्नृपादिष्टपुरुषैः प्रेषितं गुरोः ।
आचन्द्रार्कं चिरस्थायि सर्वत्र स्वं यशः पुनः ॥ ६९ ॥
स्फुरन्मानाप्तसन्मानास्ततः श्रीहीरसूरयः ।
नैकदेशागतैः सङ्घैस्तीर्थयात्रां प्रचक्रिरे ॥ ७० ॥
सर्वेषामपि जैनानां तत्र यात्रार्थमीयुषाम् ।
ततःप्रभृति सिद्धाद्रौ करमुक्तिः प्रवर्त्तते ॥ ७१ ॥

ॐ ॐ ॐ

अथ प्रतस्थे पृथ्वीशो यानपात्रैर्यदृच्छया ।
कलहंस इवैतस्मात् कासाराच्च विनिर्ययौ ॥ ७२ ॥
ततः स्वसैनिकैरेकपदे प्राप्तै रराज सः
नक्षत्रैर्युगपत्प्राप्तैरिव नक्षत्रनायकः ॥ ७३ ॥
पश्यन् काश्मीरकेदारान् विस्मेरान् विस्मयावहान् ।
शनैः शनै रोहितासाभिधं दुर्गमियाय सः ॥ ७४ ॥
अविच्छिन्नप्रयाणैश्च सर्वत्राज्ञां प्रवर्त्तयन् ।
क्रमात् शाहिरलंचक्रे पुरं लाभपुराभिधम् ॥ ७५ ॥
पराक्रमाक्रान्तसमस्तशत्रुक्ष्माशक्रचक्रः क्षितिपालशक्रः ।
एकातपत्रां बुभुजे धरित्रीमकब्बरो बर्बरवंशहंसः ॥ ७६ ॥

॥ इति महोपाध्यायश्रीसिद्धिचन्द्रगणिविरचिते श्रीशत्रुञ्जयादिसमस्ततीर्थकरमोचनाद्यनेकसुकृतकारि-
महोपाध्यायश्रीभानुचन्द्रगणिप्रभावकपुरुषचरिते पातिशाहिअकबरजलालदीन-
कश्मीरदेशगमन-नानाश्चर्यविलोकन-श्रीशत्रुञ्जयतीर्थकर-
मोचनादिवर्णनो नाम तृतीयः प्रकाशः ॥ ३ ॥

## ॥ चतुर्थः प्रकाशः ॥

अथान्येद्युः सभासीनः श्रीमान् शाहिः शुभाशयः ।
श्राद्धं दुर्जनशल्याख्यं समाहूयेदमब्रवीत् ॥ १ ॥
सर्वाङ्गीणगुणग्रामभाग्यसौभाग्यशालिना ।
श्रीहीरसूरिणा पट्टे स्वकीये स्थापितोऽस्ति कः ॥ २ ॥
सोऽवादीदुग्रवैराग्यसेवधिर्विजितेन्द्रियः ।
कामप्रदोऽपि निष्कामः सगुणोऽप्यगुणस्तथा ॥ ३ ॥
अश्राद्धोऽपि च सश्राद्धः सत्सङ्गरोऽप्यसङ्गरः ।
सूरिर्विजयसेनाख्यस्तत्पट्टे राजतेऽधुना ॥ ४ ॥
एतत्तदुक्तमाकर्ण्य हर्षोल्लसितमानसः ।
तदाहूतिकृते शाहिः स्फुरन्मानमलीलिखत् ॥ ५ ॥
प्रादात् श्रीभानुचन्द्राणां स्फुरन्मानं प्रगे प्रभुः ।
प्रेष्यं विजयसेनाख्यसूरेरित्युक्तिपूर्वकम् ॥ ६ ॥
शाहिविज्ञापितप्रेष्यप्राणिना प्रहितं च तत् ।
तत्प्राप्यानन्तरं तेऽपि चलनोपक्रमं व्यधुः ॥ ७ ॥
विहगैर्वर्द्धितोत्साहैस्ततपुरात् ते प्रतस्थिरे ।
सार्द्धं परःशतैः शिष्यैः करीन्द्राः कलभैरिव ॥ ८ ॥
ववृधे व्रजतां तेषां प्रतापः प्रतिपत्तनम् ।
प्रतिमण्डलमुष्णांशोरिवोदीचीं प्रसर्पतः ॥ ९ ॥
पदे पदे च श्रीसङ्घदीयमानधनोत्करैः ।
यदुपास्तिकृतोऽभूवन् याचका अप्ययाचकाः ॥ १० ॥
गान्धर्वैर्वाद्यमानानामातोद्यानां पथि स्वनैः ।
नादानुविद्धसारङ्ग इवोत्कर्णो जनोऽभवत् ॥ ११ ॥
तद्देशनासुधापानविधानाज्जज्ञिरे जनाः ।
उत्तीर्णात्यन्तमिथ्यात्वगरलाः सरलाः पथि ॥ १२ ॥
इत्थं यथेष्टं ते लाभमर्जयन्तः पथि क्रमात् ।
श्रीमल्लाभपुरोपान्तं प्रापुः सूरिपुरन्दराः ॥ १३ ॥
सुरत्राणैरनुज्ञाताः शेखसैन्यसमन्विताः ।
अभ्येत्यानंसिषुः सूरीन् भानुचन्द्राख्यवाचकाः ॥ १४ ॥
सूरयः शाहिना साकं हर्षोत्कर्षादमीमिलन् ।
सद्गुणै रञ्जितस्तेषां सोऽपि सत्कृतिमातनोत् ॥ १५ ॥

ततस्ते तदनुज्ञाता महामहपुरःसरम् ।
प्रतिश्रयमलंचक्रुर्मराल इव मानसम् ॥ १६ ॥
ततः श्रीवाचकद्वारा मिलिताः शाहिना समम् ।
तेषामन्तिपदां मुख्याः श्रीनंदिविजयाः पुनः ॥ १७ ॥
अवधानकलां तेषां वीक्ष्य विश्वम्भरापतिः ।
विस्मितः 'खु स्फ ह मे'ति तदा तन्नाम निर्ममे ॥ १८ ॥
ततोऽसहिष्णुभिस्तेषां विप्रैर्माहात्म्यमद्भुतम् ।
रामदासमहाराजद्वारेति ज्ञापितं प्रभोः ॥ १९ ॥
वेदबाह्या इमे नैवोपासकाः परमात्मनः ।
जातुचिन्नैव कुर्वन्ति प्रणिपातं प्रभोरपि ॥ २० ॥
तन्निशम्य सुरत्राणः क्रोधारुणितलोचनः ।
सर्वं सापेक्षमप्राक्षीत् सूरीनाहूय तत्पुनः ॥ २१ ॥
तन्निशम्योत्तरं श्रीमत्सूरयस्तमवादिषुः ।
मन्यामहे वयं सर्वे स्पर्द्धयेति वदन्त्यमी ॥ २२ ॥
भट्टाचार्यः प्रभोरेवं तन्निशम्य तदाऽवदत् ।
एभिः स्वीकृतमास्येन शास्त्रे त्वेषां न विद्यते ॥ २३ ॥
ततोऽभ्यर्णस्थितं शेखं पृथ्वीशः प्रोचिवानिति ।
युष्माभिरेव कर्त्तव्यो भट्टाचार्योक्तनिर्णयः ॥ २४ ॥
अथ तानवदत् शेखो निविश्याऽऽस्थानमण्डपे ।
विचार्यतां समं विप्रैर्यदि वः संमतः शिवः ॥ २५ ॥
तर्काधीती ततस्तत्र गर्वप्रोन्नतकन्धरः ।
भट्टाचार्याभिधः पूर्वं सूरीन् पर्यनुयुक्तवान् ॥ २६ ॥
जगत्कर्तृत्वतोऽस्माभिः शिवः साध्यस्तदत्ययात् ।
युष्माभिरुच्यते काऽत्र युक्तिस्तत्राथ ते जगुः ॥ २७ ॥
तारतम्यं त्विदः क्वापि विश्रान्तं परिमाणवत् ।
नोचेत्तरतमध्वानवाच्यत्वं नोपपद्यते ॥ २८ ॥
अस्तीह कश्चित् पुरुषः सर्वभावोपदर्शकः ।
द्रष्टृत्वतारतम्यस्य विश्रान्तेरीश्वरश्च सः ॥ २९ ॥
किञ्च वः संमतं युक्तियुक्तं न प्रतिभासते ।
विचार्यमाणमीशस्य कर्तृत्वं जगतां यतः ॥ ३० ॥
"धर्माधर्मौ विना नाङ्गं विनाङ्गेन मुखं कुतः ।
मुखाद्विना न वक्तृत्वं तच्छास्तारः परे कथम् ॥ ३१ ॥
अदेहस्य जगत्सर्गे प्रवृत्तिरपि नोचिता ।
न च प्रयोजनं किञ्चित् स्वातन्त्र्यान्न पराज्ञया ॥ ३२ ॥

क्रीडया चेत्प्रवर्त्तेत रागवान् स्यात् कुमारवत् ।
कृपयाऽथ सृजेत्तर्हि सुख्येव सकलं सृजेत् ॥ ३३ ॥
दुःख-दौर्गत्य-दुर्योनि-जन्मादिक्लेशविह्वलम् ।
जनं तु सृजतस्तस्य कृपालोः का कृपालुता ! ॥ ३४ ॥
कर्मापेक्षः सृजेत्तर्हि न स्वतन्त्रोऽस्मदादिवत् ।
कर्मजन्ये च वैचित्र्ये किमनेन शिखण्डिना ॥ ३५ ॥
अथ स्वभावतो वृत्तिरवितर्क्या महेशितुः ।
परीक्षकाणां तर्ह्येष परीक्षाक्षेपडिण्डिमः ॥ ३६ ॥
सर्वभावेषु कर्तृत्वं ज्ञातृत्वं यदि संमतम् ।
मतं नः सन्ति सर्वज्ञा मुक्ताः कायभृतोऽपि च ॥ ३७ ॥
कर्तृत्वानभ्युपगमाद् वयं नैते निरीश्वराः ।
न ह्येकधर्मास्वीकारे धर्म्मिणः स्यादपह्नवः ॥ ३८ ॥
अन्यच्च—कर्तृत्वास्वीकृतेः पुंसि जडायां प्रकृतौ पुनः ।
तदङ्गीकारतः साङ्ख्याः कथमीश्वरवादिनः ॥ ३९ ॥
वेदोक्तकर्मजनितापूर्वोत्पन्नमिदं जगत् ।
इति ब्रुवाणा औलुक्याः कथमीश्वरवादिनः ॥ ४० ॥
मायाविनिर्मितं विश्वमकर्तृत्वं जगत्प्रभोः ।
वेदान्तिनो मन्यमानाः कथमीश्वरवादिनः ॥ ४१ ॥"
इत्यादियुक्तिशक्त्योघैः प्रहताः प्रतिवादिनः ।
भट्टाचार्यादयः सर्वे वीक्ष्यापन्नास्तदाऽभवन् ॥ ४२ ॥
शेखेनाऽथ समुत्थाय विज्ञप्तः क्षितिनायकः ।
एतैः स्वशास्त्रमध्यस्थमेवोक्तं स्वामिनोऽग्रतः ॥ ४३ ॥
ततः स्युर्जयजयारावप्रतिध्वनितदिङ्मुखाः ।
माङ्गल्यधवलध्वानाकृष्टपौरवधूजनाः ॥ ४४ ॥
वाद्यमानघनातोद्यनिर्घोषैः पूरिताम्बराः ।
आलोक्यमाना लोकेन विस्मयाल्लोलमौलिना ॥ ४५ ॥
बन्दिवृन्दमुखोद्घुष्टा वादिवादजयोर्जिताः ।
प्रतिश्रयमलंचक्रुः सूरयः शाहिसत्कृताः ॥ ४६ ॥—त्रिभिर्विशेषकम् ।
अस्तमेति सहस्रांशुः सम्प्राप्तः पश्चिमां दिशम् ।
तच्चित्रं तामपि प्राप्य प्रतापो ववृधे गुरोः ॥ ४७ ॥

ॐ ॐ ॐ

अथान्येद्युः समाहूय प्रीत्या सूरिपुरन्दरान् ।
श्रीमानकब्बरक्ष्मापः सानन्दमिदमब्रवीत् ॥ ४८ ॥

प्रमाणीकृत्य मद्वाक्यं पूर्वं श्रीहीरसूरयः ।
श्रीमतां भानुचन्द्राणामुपाध्यायपदं ददुः ॥ ४९ ॥
अस्मद्वाक्यादुपाध्यायपदस्यानन्दपूर्वकम् ।
नन्दिर्युष्माभिरेतेषां यथाविधि विधीयताम् ॥ ५० ॥
सविशेषं पुनः शेखं विशेषज्ञमभाषत ।
युष्माभिस्तन्महः कार्यं स्वयं गत्वा प्रतिश्रयम् ॥ ५१ ॥
तदाकर्ण्य समुत्कर्णः सकर्णगजकेसरी ।
श्रीसूरिर्मन्त्री शेखश्च सद्यस्तत्प्रत्यपद्यत ॥ ५२ ॥
ततः श्रीसूरयः शेखमन्त्री च सपरिच्छदः ।
राज्ञो निर्देशमासाद्य प्रतिश्रयमशिश्रियुः ॥ ५३ ॥
राजन्यहास्तिकाश्वीय-नैकतूर्यादिडम्बरम् ।
स गुणी प्रगुणीचक्रे महोत्सवविधित्सया ॥ ५४ ॥
मन्त्रिणा सार्द्धमभ्येयुर्महेभ्याः श्राद्धपुङ्गवाः ।
शर्वरीसार्वभौमेन नभोमार्गे ग्रहा इव ॥ ५५ ॥
तेष्वासन् शासने जैने लीना मीना इवाम्बुनि ।
स्थानसिंहादिमा मान्या अमात्या इव भूपतेः ॥ ५६ ॥
अरंतुदं कुपक्षाणामिवासेचनकं सताम् ।
यथाशक्त्युत्सवं कर्तुं काङ्क्षन्तस्तन्मुनेस्तदा ॥ ५७ ॥
निर्शितायसशल्यानि हृदि मिथ्यादृशामिव ।
आनयन्ति स्म ते तूर्याण्यकब्बरमहीह्ररेः ॥ ५८ ॥
अथ श्रीसूरयस्तेषामु पा ध्या य पदस्य ते ।
नन्दिमानन्दसम्पूर्णां रचयांचक्रिरेतराम् ॥ ५९ ॥
ददौ वृहद्वर्द्धमानविद्यामेतस्य सूरिराट् ।
जातवेदाः स्फुरज्ज्योतिर्निकेतनमणेरिव ॥ ६० ॥
किन्नर्य्य इव नागर्य्यो जगुर्गीतिं पिकीकणाः ।
पौरीभिर्दीयते स्माशीरक्षतक्षेपपूर्वकम् ॥ ६१ ॥
त्रिलोकीमपि कुर्वाणं तत्र चित्रीकृतामिव ।
नेत्र-श्रोत्रसुधास्यन्दि तौर्यत्रिकमजायत ॥ ६२ ॥
श्रीशेखोऽप्यथ निःशेषहल्लेल्लोल्लेखभूपितः ।
मार्गणेभ्यस्तुरङ्गाणां प्रादादष्टोत्तरं शतम् ॥ ६३ ॥

---

१ अशीचकारेत्यर्थः ।–टिप्पणी । २ राज्ञोऽपत्यानि पुमांसो वा राजन्याः ।–टि० । ३ आडम्बरमित्यर्थः ।–टि० । ४ इव यथा चन्द्रेण ग्रहाः समायान्तीत्यर्थः ।–टि० । ५ तदासेचनकं यस्य दर्शनाद् दृग् न तृप्यति ।–टि० । ६ तीक्ष्णलोहसंधिशल्यानि ।–टि० । ७ अकब्बरमहीन्द्रस्य–टि० । ८ इव यथा जातवेदाः अग्निः निकेतनमणेः दीपस्य स्फुरज्ज्योतिर्ददातीत्यर्थः ।–टिप्पणी ।

तन्निरीक्षणसंप्राप्तलोकानां श्रीफलैः पुनः ।
रूप्यमुद्रायुतैर्युक्त्या स्वयं चक्रे प्रभावनाम् ॥ ६४ ॥
जृम्भकव्रजवज्जन्मोत्सवे शम्भोर्वणिग्वराः ।
ववर्षुः स्वर्णधाराभिस्तस्मिन्नन्दिमहोत्सवे ॥ ६५ ॥
गो-महिष्यादिजन्तूनां वधव्यापेधसूचकम् ।
श्रीशाहिना स्फुरन्मानं दत्वा संमानपूर्वकम् ॥ ६६ ॥
सूरयः समनुज्ञाता जग्मुर्गूर्जरमण्डले ।
रक्षिताः सन्निधावेव श्रीनन्दिविजयाः पुनः ॥ ६७ ॥

ॐ ॐ ॐ

इतश्च हीरसूरीन्द्रैर्विमृश्येति मुहुर्मुहुः ।
विनेयानां न चैतेषां लाभो लाभपुरेऽभवत् ॥ ६८ ॥
दीक्षां दत्वा ततस्तेषां प्रहितौ प्रीतिपूर्वकम् ।
सहोदरौ भावचन्द्र-सिद्धिचन्द्राभिधौ शिशू ॥ ६९ ॥
तयोर्ज्यायान् गुरोर्वैयावृत्त्यादिप्रविधानतः ।
श्लाघ्यमानोऽस्ति सर्वत्र नन्दिषेण इवापरः ॥ ७० ॥
कनीयांस्तु समग्रश्रीसुभगो विश्वविश्रुतः ।
अनन्यलभ्यसौन्दर्यन्यत्कृतश्रीतनूद्भवः ॥ ७१ ॥
जगन्नयनपीयूषकलशैरनिशं भृशम् ।
सिच्यमानः क्रमेणाथ ववृधे कल्पवृक्षवत् ॥ ७२ ॥
परस्परस्पर्द्धयेवावर्द्धन्तः सकलाः कलाः ।
यद्यप्यत्र तथाप्युच्चैरद्भुतः प्रतिभागुणः ॥ ७३ ॥
उपायचतुरा यस्य धिषणा सर्वतोमुखी ।
यत्पुरोऽभय-रोहादिप्रतिभा वर्णिकायते ॥ ७४ ॥
अन्येद्युः कौतुकायातं सिद्धिचन्द्रमुनिं नृपः ।
पुरः स्मरमिवाद्राक्षीद्भवभीत्या धृतव्रतम् ॥ ७५ ॥
रूपातिशयविस्फूर्त्तौ तस्य मूर्त्तौ नरेशितुः ।
स्पर्द्धयेवाक्षियुग्मस्य जगाम स्थिरतां मनः ॥ ७६ ॥
आनन्दामृतमग्नस्य लीनं तस्य मनस्तथा ।
यथा गुरुं च विश्वं च स्वं च नो बुबुधे तदा ॥ ७७ ॥
अप्राक्षि च मुनीन्द्राणां–'द्विपेष्विव सुरद्विपः ।
सुधांशुरिव धिष्ण्येषु त्रिदिवाद्रिरिवाद्रिषु ॥ ७८ ॥
शालिधान्यमिवान्नेषु कल्पद्रुम इव द्रुषु ।
अम्भोधिष्विव दुग्धाब्धिश्चम्पकः कुसुमेष्विव ॥ ७९ ॥

हिरण्यमिव लोहेषु रसेष्विव सुधारसः ।
मुख्यः सर्वकुमारेषु कोऽयं मुनिकुमारकः ?' ॥ ८० ॥
ततः श्रीवाचकैरूचे–'प्रकृत्या विनयान्वितः ।
अष्टावधानविज्ञानमल्लीदाममधुव्रतः ॥ ८१ ॥
मच्छिष्यः सिद्धिचन्द्रोऽयं वैराग्यादाहृतव्रतः ।
साम्प्रतं गूर्जरत्रातो मत्समीपमुपागतः' ॥ ८२ ॥
तस्यादृष्टचरं दृष्ट्वा सौन्दर्यं हृदि विस्मितः ।
स्नेहेन शाहिनाऽऽहूय निर्निमेषं निरीक्षितः ॥ ८३ ॥
अन्तःसभमथाहूय समक्षं सर्वभूभुजाम् ।
अवधानविधानादिपरीक्षां कृतवान् प्रभुः ॥ ८४ ॥
अतुलां तत्कलां चैनां दर्शं दर्शं चमत्कृतः ।
विख्यातं 'खु स्फ ह मे'ति तस्य नाम प्रदत्तवान् ॥ ८५ ॥
भूयोभूयस्तमित्याह प्रसन्नवदनः प्रभुः ।
'त्वया मत्सूनुभिः सार्द्धं स्थेयमत्रैव नित्यशः' ॥ ८६ ॥
कदाचित् शाहिनाऽऽहूतः कदाचन पुनः स्वतः ।
असावन्तःसभं गच्छन्नधीयानश्च तिष्ठति ॥ ८७ ॥
महाभाष्यादिकान्येष नाना व्याकरणानि च ।
नैषधादीनि काव्यानि तर्कांश्चिन्तामणीमुखान् ॥ ८८ ॥
काव्यप्रकाशप्रमुखानलङ्काराननेकशः ।
छन्दःशास्त्राण्यनेकानि नाटकान्यपि लीलया ॥ ८९ ॥
अध्यैष्ट सर्वशास्त्राणि स्तोकैरेव दिनैस्ततः ।
शाहिना प्रेरितोऽत्यन्तं सत्वरं पारसीमपि ॥ ९० ॥
आह्वत्येव वृहद्भानुर्विद्युतेव बलाहकः ।
ज्योत्स्नयेव निशारत्नं तयाऽत्यर्थं व्यराजत ॥ ९१ ॥
अथो महीन्द्रमाज्ञाप्य श्रीनन्दिविजयाः पुनः ।
श्रीमत्सूरीश्वरोपान्तं जग्मुर्गूर्जरमण्डलम् ॥ ९२ ॥

* * *

इतश्च हीरसूरीन्द्राः स्वर्गलोकमशिश्रियन् ।
अनाकर्ण्य तदाकर्ण्य धराधीशः शुचं व्यधात् ॥ ९३ ॥
अप्राक्षीदश्रुपूर्णाक्षो वीक्षापन्नश्च वाचकान् ।
'कुत्र ग्रामे ययुर्देवभूयं श्रीहीरसूरयः' ॥ ९४ ॥
विलक्षा जगदुस्तेऽपि–'राष्ट्रे सौराष्ट्रनामनि ।
विद्यते वन्दिरं द्वीपं परीतं परितोऽब्धिना ॥ ९५ ॥

अस्ति तन्निकषा ग्रामो धाम यः सर्वसम्पदाम्
ऊना नाम्ना महिम्ना तु पुरुहूतपुरोपमः ॥ ९६ ॥
निरवर्त्तत निर्वाणं तत्र तेषां महात्मनाम् ।
तद्देहस्याग्निसंस्कारस्तस्यैवोपवने पुनः ॥ ९७ ॥
आश्चर्यं तच्चिताधूमश्लेषान्माकन्दपादपाः ।
अकालेऽपि फलन्ति स्म श्रीगुरूणां प्रभावतः ॥ ९८ ॥
तत्र स्तूपकृते तेषां भूमिरीप्सत् प्रदीयताम्' ।
आकर्ण्य क्ष्मापतिः श्रीमद्वाचकेन्द्रादिदं वचः ॥ ९९ ॥
'दशवीघा'मितक्षेत्रपत्रं कृत्वा प्रदत्तवान् ।
रङ्गचन्द्रनिजभ्रातृहस्ते तत्प्रेषितं च तैः ॥ १०० ॥
तस्मिन् ग्रामे ततः स्तूपं चक्रे पत्राह्यनन्तरम् ।
भक्तियुक्तेन सङ्घेन विमानं स्वर्गिणामिव ॥ १०१ ॥

ॐ ॐ ॐ

इतः कश्मीरकिञ्जल्कपुष्पोद्गमदिदृक्षया ।
प्रतस्थे पृथिवीनाथः पुनः श्रीनगरं प्रति ॥ १०२ ॥
अमन्दानन्दसंपूर्णः शाहिः सत्कृत्य वाचकान् ।
सार्द्धमाकारयामास सिद्धिचन्द्रसमन्वितान् ॥ १०३ ॥
पठन्तः पारसीग्रन्थास्तत्तनूजाङ्गजैः[1] समम् ।
प्रातः पूर्वदिनाभ्यस्तं पुरः श्रावयतः प्रभोः ॥ १०४ ॥
कुर्वतश्च वरीवस्यां[2] शाहेः स्नेहार्द्रचेतसः ।
प्रसिद्धिः सिद्धिचन्द्रस्य सर्वत्र ववृधेतराम् ॥ १०५ ॥
पर्वतान् रत्नपंजाल-पीरपंजालकादिकान् ।
हिमैरभ्रंलिहै[3]स्तुङ्गशृङ्गानुल्लङ्घ्य दुर्गमान् ॥ १०६ ॥
क्रमाद्गत्वाथ कश्मीरं दृष्ट्वा काश्मीरभूरुहान्[4] ।
प्रफुल्लकुसुमामोदलोलरोलम्ब[5]चुम्बितान् ॥ १०७ ॥
स्थित्वा च कतिचिन्मासांस्तत्राश्चर्यदिदृक्षया ।
प्रत्यावृत्त्य पुनर्लाभपुरं शाहिरभूषयत् ॥ १०८ ॥–त्रिभिर्विशेषकम् ।
कुरङ्गक्रीडयाऽऽसक्तः कुरङ्गेणान्यदा नृपः ।
शृङ्गाग्रेण तथा विद्धो यथा मूर्च्छामुपेयिवान् ॥ १०९ ॥
तत्प्रघातप्रतीकारानन्तर्द्धाम विधापयन् ।
[6]सपत्राकृतितस्तस्थौ पञ्चाशद्दिवसान्नृपः ॥ ११० ॥

---

१ तनूजाङ्गजाः पुत्रपुत्राः ।–टि० । २ वरीवस्या सेवा ।–टि० । ३ अभ्रं आकाशं लिहन्ति चुम्बन्तीत्यभ्रंलिहानि ।–टि० । ४ केसरवृक्षान् ।–टि० । ५ रोलम्बा भ्रमराः ।–टि० । ६ 'सपत्राकृति-निष्पत्राकृती त्वत्यंतपीडने' इत्यभिधानचिन्तामणिः ।–टि० ।

अन्येषां गमनाभावात्तत्राविश्रम्भतः[1] स्थितम् ।
श्रीशेखसहितैः श्रीमद्वाचकैरेव सन्निधौ ॥ १११ ॥
सोऽभवत् पूर्वपुण्येनोल्लाघः[2] पुण्यचिकीः[3] पुनः ।
गवां पञ्चशतं प्रैषीद्दानार्थं तत्प्रतिश्रये[4] ॥ ११२ ॥
ददुस्ते सुरभीः[5] सर्वाः श्राद्धद्वारा द्विजन्मनाम् ।
नटीव तत्पुरे सा तत्कीर्त्तिरद्यापि नृत्यति ॥ ११३ ॥
अन्यदा हास्तिकाश्वियानेकराजन्यकैर्नृपः ।
[6]चलामप्यचलां कुर्वन्नुग्रसेनपुरं ययौ ॥ ११४ ॥
भानुचन्द्रा अपि श्रीमत्सिद्धिचन्द्रसमन्विताः ।
समीयुः शाहिना सार्द्धं पाठयन्तश्च तत्सुतान्[7] ॥ ११५ ॥
सिद्धिचन्द्रोपरि स्नेहस्तत्र शाहेर्महानभूत् ।
यदीहां चक्रिरे पौत्रा[8]स्तदुत्सङ्गे[9]ऽपि वर्द्धिताः ॥ ११६ ॥
तत्र चिन्तामणेश्चैत्यं प्रारब्धमपि तज्ज्ञैः ।
शाहिर्व्युद्ग्राहितो मिथ्यादृष्टिभिस्तन्यवारयत् ॥ ११७ ॥
कृतवांस्तत्पुनः सद्यः शाहेर्विज्ञप्तिपूर्वकम् ।
सिद्धिसौधसमारूढं सिद्धिचन्द्रः स्वशक्तितः ॥ ११८ ॥

ॐ ॐ ॐ

इतः सौराष्ट्रराष्ट्रेऽस्मिन् तीर्थे श्रीविमलाचले[11] ।
चैत्यं तन्मूलचैत्यान्तः प्रकुर्वद्भिः स्वगर्वतः ॥ ११९ ॥
बभूव श्रीतपागच्छश्रद्धालूनां मनस्विनाम्[12] ।
सार्द्धं खरतरश्राद्धैरतुलः कलहोदयः ॥ १२० ॥
कथंचिदात्मनः कार्यविलम्बेनापि विद्विषाम् ।
क्षतिः[13] कार्यस्य कार्येति स्मृत्वा नीतिविदां वचः ॥ १२१ ॥
अस्मिन्नतः परं नव्यं चैत्यं न क्रियतामिति ।
श्रीवाचकवराः शाहेः स्फुरन्मानमकारयन् ॥ १२२ ॥
अथ प्रतस्थिवान् जेतुं दाक्षिणात्यनृपान्नृपः ।
चतुरङ्गचमूचक्रैर्युक्तश्चक्रीव मूर्त्तिमान् ॥ १२३ ॥
प्रयाणैश्च रिपुप्राणप्रहाण[14]प्रवणैः क्रमात् ।
गोपाचलेति विख्यातं दुर्गदुर्गम[15]मुपागमत् ॥ १२४ ॥

---

१ विश्रंभो विश्वासः ।–टि० । २ उल्लाघः नीरोगः ।–टि० । ३ पुण्यं चिकीर्षतीति पुण्यचिकीः ।–टि० । ४ प्रतिश्रय उपाश्रयः ।–टि० । ५ सुरभयो गावः ।–टि० । ६ पृथ्वी ।–टि० । ७ शाहिपुत्रान् ।–टि० । ८ पौत्राः पुत्रपुत्राः ।–टि० । ९ उत्सङ्ग अङ्कः ।–टि० । १० उग्रसेनपुरप्रभाद्धजनैः ।–टि० । ११ श्रीशत्रुञ्जयतीर्थे ।–टि० । १२ मानवतामित्यर्थः ।–टि० । १३ क्षतिः हानिः ।–टि० । १४ प्रहाणो विनाशं ।–टि० । १५ दुर्गो वप्रः–दुःखेन गम्यते इति दुर्गः ।–टि० ।

तत्र चाद्रिं[1] समुत्कीर्य केनचिज्जैनभूभुजा ।
निर्मापितानि विद्यन्ते जैनबिम्बानि लक्षशः ॥ १२५ ॥
तानि व्यङ्गानि संवीक्ष्य विहितानि दुरात्मभिः ।
अवोचत् खेदभृत् क्ष्माभृद्वाचकान् स्वच्छमानसः ॥ १२६ ॥
'यो गुणी प्रगुणी कुर्याद् बिम्बान्येतानि बुद्धिमान् ।
तस्मै मत्कोशतो द्रव्यं प्रयच्छामि यथेप्सितम्' ॥ १२७ ॥
इत्थं तस्मिन्नुत्तमत्वाविसंवादिप्रवादिनि ।
तस्मै तत्कृत्ययोग्यं ते श्राद्धमेकमदर्शयन् ॥ १२८ ॥
तेन श्राद्धेन तद्द्रव्यात् तत् कृत्यमचिरात्कृतम् ।
विलम्बः सर्वथा धर्मे यतो नौचित्यमश्नुते ॥ १२९ ॥
उर्वीमुर्वीमथानुर्वीकुर्वन् सैन्यभरैर्निजैः ।
श्रीवर्हानपुरं भूभृत् प्रवर्हः प्राप्तवान् क्रमात् ॥ १३० ॥
ततो दुर्गं विनिर्जित्यासेराख्यं स्वीयदोर्बलात् ।
सैन्यमुखान् पुरः प्रेष्य स्वयं तत्रैव तस्थिवान् ॥ १३१ ॥
पाठयन्तश्च तत्पौत्रान् श्रीमन्तो वाचका अपि ।
तस्थुस्तत्रैव तत्पार्श्वे सिद्धिचन्द्रसमन्विताः ॥ १३२ ॥
दत्तान्यदैन्यैस्तत्सैन्यैरथो युध्वा विजिग्यिरे ।
दाक्षिणात्या नृपाः सर्वे दुर्गदुर्गाधिवासिनः ॥ १३३ ॥

ॐ ॐ ॐ

अन्यदा धर्मसंवादसादरं क्ष्मापुरन्दरम् ।
पूर्वं तत्रत्यसंघेन प्रणुन्ना गुरवोऽवदन् ॥ १३४ ॥
'श्रीवर्हानपुरे भूरि भूरिभिर्भरितेऽभितः ।
वर्तन्ते रम्यहर्म्याणि महेभ्याश्च सहस्रशः ॥ १३५ ॥
सर्वदर्शनिदेवानां नैकदेवकुलानि च ।
प्रासादः किन्तु जैनानामस्मिन्नैकोऽपि विद्यते' ॥ १३६ ॥
तेन कस्मादिति प्रोक्ते तैरूचेऽनार्यवारणात् ।
विहितोऽप्येकशः पूर्वं पातितस्तैर्दुरात्मभिः ॥ १३७ ॥
तन्निशम्याभवद्भूमान् विषन्न(ण्ण)हृदयस्ततः ।
चिकीर्षुस्तत्पुरं जैनप्रासादैर्भूरिभूषितम् ॥ १३८ ॥
स्वीयाधिकारिणस्तेषां श्राद्धानाहूय भूपतिः ।
तत्कृत्यकरणादेशं प्रादादत्युग्रशासनः ॥ १३९ ॥
प्रमाणीकृत्य निर्देशं प्रभोस्तेऽपि प्रचक्रिरे ।
मन्यमानाः स्वयं धन्यं प्रासादान् सप्रतिश्रयान् ॥ १४० ॥

१ अद्रिः पर्वतः ।-टि० ।

तथाहि–

श्रीश्रीमालकुलाम्भोजभास्करः श्राद्धशेखरः ।
कंसारपाटके चक्रे जयराजः प्रतिश्रयम् ॥ १४१ ॥
श्रीसङ्घाधिपतिस्तत्र रिखुस्तस्यैव संनिधौ ।
भीडिभञ्जनपार्श्वस्य प्रासादं निरमीमयत् ॥ १४२ ॥
श्राद्धो दुर्जनशल्यस्तु मान्योऽमात्य इव प्रभोः ।
गिरेः शृङ्गमिवोत्तुङ्गं पीठे चैत्यमचीकरत् ॥ १४३ ॥
बिम्बमानाय्य रा(आ?)मेरात् श्रीशैवेयजगत्प्रभोः ।
तत्र च स्थापितं मूलनायकत्वेन वाचकैः ॥ १४४ ॥
अमात्रश्रद्धया श्राद्ध्या तत्रैवोच्चैरकार्यत ।
गौरीति ख्यातया चैत्यमन्यया च प्रतिश्रयः ॥ १४५ ॥
इत्थं श्रीपाठकप्रष्ठोपदेशात्तत्र जज्ञिरे ।
प्रासादोपाश्रयादीनि श्रेयःकृत्यान्यनेकशः ॥ १४६ ॥
कैलाशाचलसंकाशाः प्रासादाः सप्रतिश्रयाः ।
सन्ति ते तत्पुरेऽद्यापि श्रीगुरोर्यशसामिव ॥ १४७ ॥
अथ प्रतस्थे पृथ्वीशः कृतार्थः पार्थविक्रमः ।
वाचकेन्द्रैस्तु तत्रैव शरीरास्वास्थ्यतः स्थितम् ॥ १४८ ॥
सिद्धिचन्द्रान् सहादाय सस्नेहं पार्थिवः क्रमात् ।
उग्रसेनपुरं प्राप पौरक्ल्प्तोरुगौरवः ॥ १४९ ॥
सिद्धिचन्द्राः स्थितास्तत्र कुर्वन्तः शासनोन्नतिम् ।
अन्यानपेक्षया धर्मधुरं धौरेयवद्दधुः ॥ १५० ॥

यतः–

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्त्तयते स्वयं हृतैः ।
लघयन् खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १५१ ॥

॰ ॰ ॰

इतश्चाजीजकोकाख्यतनूजः खुरमाभिधः ।
उपत्यकास्थितं चैत्यं विमलाद्रेरपातयत् ॥ १५२ ॥
अधित्यकामूलचैत्यं काष्ठैस्त्वापूर्य सर्वतः ।
इयेष वह्निसात्कर्तुं यावदत्यन्तदुष्टधीः ॥ १५३ ॥
श्रीमद्विजयसेनाख्यसूरीणां लेखहारकः ।
आगत्य सिद्धिचन्द्राणां तावल्लेखं प्रदत्तवान् ॥ १५४ ॥
तदन्तर्लिखितं तं च वृत्तान्तमवबुध्य ते ।
गत्वा कृत्वा च विज्ञप्तिं शाहेः पत्रमकारयन् ॥ १५५ ॥

तत्पत्रप्रेषणादेव सिद्धिचन्द्रैर्विनिर्ममे ।
शत्रुञ्जयगिरेर्मूलचैत्योपद्रववारणम् ॥ १५६ ॥
तीर्थरक्षादिकृत्यं तत् कर्तुं तैरेव शक्यते ।
गजव्यापादनं यस्मात् सिंहैरेव विधीयते ॥ १५७ ॥

* * *

अन्यदाऽनन्यसौजन्यस्नेहोल्लासवशंवदः ।
स्मृत्वा श्रीवाचकेन्द्राणां शाहिर्लेखमलीलिखत् ॥ १५८ ॥
'स्मर्त्तव्योऽहं त्वया स्नेहान्न स्मरिष्याम्यहं पुनः ।
स्मरणं चेतसो धर्मस्तच्चेतो भवता हृतम्' ॥ १५९ ॥
इत्याद्यनेकच्छेकोक्तिप्रेमाविर्भावकं च तत् ।
प्राप्य हृत्यर्थमेतेऽपि तूर्णं तत्र समाययुः ॥ १६० ॥
आलोक्य श्रीगुरून् सोऽपि प्रेम्णाऽऽलिङ्ग्योल्लसन्मुदा ।
उत्कल्लोलाम्बुधेर्लीलामधाच्चिरमथाभ्यधात् ॥ १६१ ॥
'सद्यः प्रसद्य मत्पौत्राध्यापनागमनादिभिः ।
पूर्ववत् प्रीणनीयोऽहं'–ततस्तेऽपि तथा व्यधुः ॥ १६२ ॥

* * *

अत्रान्तरे च सूरीणामिति लेखः समागमत् ।
प्रत्यादेशात् पुरा शाहेर्नव्यप्रासादनिर्मितेः ॥ १६३ ॥
कर्मस्थायकरैः कर्मस्थायं कर्त्तुं न शक्यते ।
ततः कार्यं यथा शत्रुञ्जये स्याच्चैत्यनिर्मितिः ॥ १६४ ॥
अन्यथा तीर्थमुख्यस्योच्छेदः सम्भाव्यते ध्रुवम् ।
पतनाज्जीर्णचैत्यानां नव्यानां चाविधापनात् ॥ १६५ ॥
सिद्धिचन्द्रैर्जगन्नेत्रचन्द्रैर्विज्ञाप्य भूभुजम् ।
ततो निर्माय तत्पत्रं प्रहितं च प्रयत्नतः ॥ १६६ ॥
ततःप्रभृति चैत्यानि तत्रानेकानि जज्ञिरे ।
शरच्चन्द्रोज्ज्वलास्तेषां पुनः सर्वत्र कीर्त्तयः ॥ १६७ ॥

* * *

अथो शाहिसलेमस्य शाहिज्येष्ठाङ्गजन्मनः ।
देशोऽभूद् गूर्जरस्तत्र सामन्तान् प्राहिणोच्च सः ॥ १६८ ॥
ते चाकबरभूभर्त्तुः स्फुरन्मानं न मेनिरे ।
अमारिप्रभृतिश्रेयःकृत्ये विघ्नस्ततोऽभवत् ॥ १६९ ॥
लेखाद्विज्ञाय तद्वृत्तं सम्प्राप्यावसरं पुनः ।
संस्तवादिति विज्ञप्तः सिद्धिचन्द्रैर्नृपाङ्गजः ॥ १७० ॥
गूर्जरे जीजिआ-मारि-शुल्कग्राहादिविप्लवः ।
श्रूयते शाहिसामन्तैः क्रियमाणः सुदुःसहः ॥ १७१ ॥

तन्निशम्याभवद्भूमान् विषण्णहृदयः क्षणम् ।
तन्निवृत्तिकृते तेभ्यः पत्रं कृत्वाऽथ दत्तवान् ॥ १७२ ॥
ततःप्रभृति सर्वत्र शुल्कादीनां निवर्तनात् ।
तद्देशेष्वभवन् लोकाः सर्वेऽपि निरुपद्रवाः ॥ १७३ ॥

इतश्चाकब्बरक्ष्मापः प्रापदेकोऽपि पञ्चताम् ।
सलेमशाहिस्तद्राज्येऽभिषिक्तश्च सुमन्त्रिभिः ॥ १७४ ॥
उज्झितां दण्डशुल्कादिक्लेशलेशैरपि क्षितिम् ।
अपालयदयं बालमिवाप्रकुपितः पिता ॥ १७५ ॥
नातिष्ठत् पुरतः कश्चित् दिग्जैत्रे तत्र शात्रवः ।
अर्के विक्रामति ध्वान्तविक्रमः क्रमतां कुतः ॥ १७६ ॥
अनेकैः सममेकाऽपि नानादेशनिवेशिभिः ।
तस्याज्ञा मेने मुर्ध्नि विधेरिच्छेव जन्मिभिः ॥ १७७ ॥
भूभुजस्तत्र षाड्गुण्योपायशक्तित्रयादयः ।
फलन्ति चिन्तितैरर्थैः साक्षात्कल्पद्रुमा इव ॥ १७८ ॥
कदाचिदद्भुतारामे कदाचित् सिंधुरोधसि ।
कदाचित् केलिशैलेषु कदाचिच्चित्रसद्मसु ॥ १७९ ॥
कदाचिद्वनितोल्लासहल्लीसकविगाहने ।
कदाचित् किन्नरीतारगीताकर्णनकौतुके ॥ १८० ॥
कदाचिदुपदाऽऽयातनटीघटितनाटके ।
जीहांगीरनृपस्तस्थावित्थं स्वर्गे हरिर्यथा ॥ १८१ ॥–त्रिभिर्विशेषकम् ।

अथो श्रीवाचकोत्तंसाः सिद्धिचन्द्रैः समन्विताः ।
त्रयोविंशति वर्षान्ते मुदा विज्ञप्य तं नृपम् ॥ १८२ ॥
तत्तद्ग्रामसमायातासंघसामन्तसत्कृताः ।
क्रमादहम्मदावादं भूपयां चक्रिरेतराम् ॥ १८३ ॥–युग्मम् ।
त्रम्बावत्यां पुनर्नत्वा श्रीसूरींस्तन्निर्देशतः ।
आगत्याहम्मदावादे ते चतुर्मासकं व्यधुः ॥ १८४ ॥
स्वोपाश्रये सिद्धिचन्द्रैः समानीतेन सादरम् ।
विक्रमार्काभिधानेन तद्देशस्वामिना ततः ॥ १८५ ॥
पूजा व्यधायि समवसृतौ श्रीमज्जिनेशितुः ।
अमारिपटहोद्घोषः सर्वत्रापि च दापितः ॥ १८६ ॥
ततश्च गुरुनिर्देशात् पर्जन्यावस्थितिं पुनः ।
निर्माय श्रीमहीशानपुरे पत्तनमाययुः ॥ १८७ ॥

तत्र चात्यन्तमौन्नत्यं संवीक्ष्योत्पन्नमत्सराः ।
श्रीमद्विजयदेवाख्यसूरीणां सुमहात्मनाम् ॥ १८८ ॥
एकीभूयान्यगच्छीयसूरिभिर्भूरिभिः सह ।
तैः समं पण्डितंमन्यतया वादं विधित्सवः ॥ १८९ ॥
स्थिताः खरतरा द्रङ्गगोपुरे सपरिच्छदाः ।
वादार्थमन्यगच्छीयैराचार्यास्तानजूहवन् ॥ १९० ॥–त्रिभिर्विशेषकम् ।
ततस्ते सिद्धिचन्द्रांस्तान् मत्वा वादविधौ क्षमान् ।
प्रचेलुः सार्द्धमादाय विद्वद्वृन्दसमन्विताः ॥ १९१ ॥
तत्र गत्वा विदित्वा च प्रोद्धतान् प्रतिवादिनः ।
वादं विधातुं तैः सार्द्धं सिद्धिचन्द्रान् समादिशन् ॥ १९२ ॥
तथा तैर्निर्जितास्ते च तर्ककर्कशयुक्तिभिः ।
आसन् समक्षं सभ्यानां कृतमौनव्रता इव ॥ १९३ ॥
वीक्षापन्ना भृशं सभ्यैर्न्यत्कृताश्च मुहुर्मुहुः ।
उत्थाय प्रययुः फालभ्रष्टा इव वनौकसः ॥ १९४ ॥
ततः श्रीमदनूचानाः सन्महैः सपरिच्छदाः ।
स्वोपाश्रयमलंचक्रुस्तत्र लब्धजयश्रियः ॥ १९५ ॥
ततः कियद्दिनैस्तत्र श्राद्धया लाल्यभिधानया ।
आरब्धस्तीर्थकृद्बिम्बप्रतिष्ठाया महोत्सवः ॥ १९६ ॥
नैकग्रामागतैः संघैस्तद्दिदृक्षासमुत्सुकैः ।
विस्तीर्णमपि संकीर्णमभवत् पत्तनं तदा ॥ १९७ ॥
जलयात्राक्षणेऽकस्मात् सादुल्लाभिधभूभुजा ।
कर्णेजपोक्तितश्चक्रे निर्देशस्तन्निषेधकृत् ॥ १९८ ॥
हाहारवस्तदा जज्ञे तद्भङ्गे रङ्गभङ्गतः ।
गतोऽपि लोको विज्ञप्त्यै तेन निर्भर्त्सितो भृशम् ॥ १९९ ॥
अनन्यगत्याऽनूचानैः प्रोचे श्रीवाचकान् प्रति ।
श्रीमद्भिरेव कर्त्तव्यं कृत्यं गत्वाऽन्यथा स्थितम् ॥ २०० ॥
तत्क्षणे सिद्धिचन्द्रास्ते तत्रागत्येत्यवादिषुः ।
कार्यमेतन्मया कार्यं न कार्यो मद्गुरोः श्रमः ॥ २०१ ॥
ततः श्रीमदनूचानैस्तथेत्युक्ते प्रहर्षितैः ।
सोत्साहास्ते समं सङ्घैर्जग्मुस्तन्नृपसद्मनि ॥ २०२ ॥
पूर्वसंस्तवतो द्वारि धारिता नैव वेत्रिभिः ।
गत्वा चोपाविशन् मीर्यासादुल्लान्नृपसन्निधौ ॥ २०३ ॥
'किमुद्दिश्यागता यूयमि'त्युक्तास्ते तमभ्यधुः ।
'श्रेयःकृत्ये किमारब्धो विघ्नः श्रीमद्भिरीदृशः ॥ २०४ ॥

आवयोः प्रीतिविच्छेदनिदानं तत् त्वया कृतम्' ।
सोऽपि तैरित्युपालब्धो लज्जानम्रो मनागभूत् ॥ २०५ ॥
ब्रूत 'किं वः प्रियं कुर्यामि'त्युक्ते ते च तं जगुः ।
'आगत्योपाश्रये पूर्वं प्रीणयित्वा च मद्गुरून् ॥ २०६ ॥
द्वेधापि श्रीफलं ग्राह्यं जलयात्रामहोत्सवे' ।
तत् तदुक्तमुरीकृत्य तथैव कृतवान् पुनः ॥ २०७ ॥
मनोरथतरुः सम्यग्दृशामासीत् फलग्रेहिः ।
तदावकेशी तद्विघ्नकृतां मिथ्यादृशां पुनः ॥ २०८ ॥
वटपद्रेऽथ गन्धारे कृत्वा ज्येष्ठस्थितिं पुनः ।
वाचकास्ते चतुर्मासीमासीनाः पत्तनेऽन्यदा ॥ २०९ ॥

* * *

इतः शाहेः स्फुरन्मानं श्रीराजनगरे तदा ।
अगात् श्रीमज्जिहांगीर(रि?) कुलीखानस्य रक्षितुः ॥ २१० ॥
'सिद्धिचन्द्रैः समेताः श्रीभानुचन्द्रा मदन्तिके ।
प्रेष्या' इति तदन्तःस्थं प्रमेयमवबुध्य सः ॥ २११ ॥
स्थितांस्तान् पत्तने ज्ञात्वा प्रेष्य स्वीयाङ्गरक्षकम् ।
तत्र माधवदासाख्यं ससत्कारमजूहवत् ॥ २१२ ॥
आगत्याहम्मदावादं मिलित्वा तं नृपं पुनः ।
सिद्धिचन्द्रान् सहादाय वाचकेन्द्राः प्रतस्थिरे ॥ २१३ ॥
प्रयाणक्रमतस्ते च मेदिनीद्रंगमागमन् ।
तत्र सप्रत्ययं पार्श्वं फलवर्द्धौ ववन्दिरे ॥ २१४ ॥
आचार्यीयैः खरतरैस्तत्तीर्थं कर्तुमात्मसात् ।
तद्देशाध्यक्षसांनिध्यात् प्रारब्धो विग्रहस्तदा ॥ २१५ ॥
पञ्चषान् दिवसांस्तत्र स्थित्वा ते सौवशक्तितः ।
तत्तीर्थमात्मसात्कृत्वा प्रचेलुः पुनरग्रतः ॥ २१६ ॥
प्रतिग्रामं प्रतिद्रङ्गं कुर्वन्तः शासनोन्नतिम् ।
उग्रसेनपुरं प्रापुः पुनश्चिश्रावहैर्महैः ॥ २१७ ॥
आगतौ श्रीभानुचन्द्र-सिद्धिचन्द्रौ बहिःस्थितौ ।
रामदासादिति श्रुत्वा श्रीशाहिस्तावजूहवत् ॥ २१८ ॥
मूर्तिमन्ताविवावेक्ष्य पुष्पदन्ताविमौ पुनः ।
प्रामोमोदीन् मेदिनीमान् अत्यन्तं च व्यसेष्मयीत् ॥ २१९ ॥

१ मिरजा धमधवीनापरनाम्नः ।-टिप्पणी । २ फलवर्द्धिग्रामे ।-टिप्पणी ।

स्वागतं स्वागतं चेति प्रश्नपूर्वमपूर्वमुत् ।
'आगन्तव्यं मदभ्यर्णं नित्यमि'त्यवदत् पुनः ॥ २२० ॥

अन्येद्युरुल्लसत्स्नेहसिन्धुकल्लोलसङ्कुलः ।
इत्युपाध्यायमूर्द्धन्यान् धन्यान् धात्रीधवोऽभ्यधात् ॥ २२१ ॥
'अनन्यजन्यसौजन्यलावण्यगुणशालिनः ।
सिद्धिचन्द्राः प्रकुर्वन्तु प्रत्यहं मत्पुरः क्षणम्' ॥ २२२ ॥
शृण्वन् हर्षोल्लसद्धर्षरोमस्तद्देशनां नृपः ।
तत्क्रमाम्भोजयोर्भृङ्गभङ्गीमङ्गीचकार सः ॥ २२३ ॥
अगमच्च कियान् कालस्तेषामेवं प्रकुर्वताम् ।
प्रससार चतुर्दिक्षु ततस्तद्गुणधोरणी ॥ २२४ ॥
लग्नं तेषु तथा प्रेमवज्रलेपेन तन्मनः ।
न यथाऽऽकर्षि राज्यश्रीधुरीणैरपि वारणैः ॥ २२५ ॥
तेऽपि क्षमापगतं चेतः स्नेहाधिक्यतयात्मनः ।
आकृष्टुमक्षमा आसन् पङ्कमग्नमिव द्विपम् ॥ २२६ ॥
आकाशान्निपतद्गङ्गाप्रवाहप्रख्ययाभितः ।
श्वेतद्वीपायिते चन्द्रज्योत्स्नया भूतलेऽखिले ॥ २२७ ॥

इतश्चन्द्रोदयवर्णनम्—

कैलाशायितमद्रिभिर्विटपिभिः श्वेतातपत्रायितं
मृत्पिण्डेन दधीयितं जलनिधौ दुग्धायितं वारिभिः ।
मुक्ताहारलतायितं व्रततिभिः शङ्खायितं श्रीफलैः ।
श्वेतद्वीपजनायितं जनपदैर्जाते शशाङ्कोदये ॥ २२८ ॥
मुग्धा दुग्धधिया गवां विदधते कुम्भानधोवल्लवाः,
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।
कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाशङ्कया,
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ! ॥ २२९ ॥
मुक्तादाममनोरथेन वनिता गृह्णन्ति वातायने,
गोष्ठे गोपवधूर्दधीनि मथितुं कुम्भागतान् वाञ्छति ।
उच्चिन्वन्ति च मालतीषु कुसुमश्रद्धालवो मालिकाः,
शुभ्रान् विभ्रमकारिणः शशिकरान् पश्यन्न को मुह्यति ? ॥ २३० ॥
कपाले मार्जारी पय इति करान् लेढि शशिन,-
स्तरुच्छिद्रप्रोतान् विशमिति करी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति,
प्रभामत्तश्चन्द्रो जगदिदमहो ! विप्लवयते ॥ २३१ ॥

गन्धान्धा मधुपा भ्रमन्ति कुमुदं नासाद्य पर्याकुलाः,
पार्श्वस्थैरपि हन्त हंसमिथुनैरन्योन्यमुद्वीक्ष्यते।
किं चैते मदवारणा अपि रसादुन्मुच्य वैरं मिथो,
मन्दं मन्दमिव स्पृशां करिणीमाशङ्कमानाः करैः ॥ २३२ ॥
ज्योत्स्ना जाले निमग्नं स्पृशति वनकरी शुण्डया दन्तदण्डं,
साशङ्कं कण्ठनालं वलयति चमरी चामरं द्रष्टुकामा।
साश्रा कूजत्यजस्रं प्रसवमणिमनालोकयन्ती मराली,
किं ब्रूमः क्षीरसिन्धुस्तुहिनगिरिरपि क्वापि चन्द्रेण नीतौ ॥ २३३ ॥
कर्पूरैः किमपूरि किं मलयजैरालेपि किं पारदै-,
रक्षालि स्फटिकान्तरैः किमघटि द्यावापृथिव्योर्वपुः।
एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ,
दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि ॥ २३४ ॥

व्याख्यानं कुर्वतां तेषां परभागवतां सताम्।
अन्तराले विमृश्यान्तः किञ्चिदित्युक्तवान् नृपः ॥ २३५ ॥
'परब्रह्मप्रसक्तानां व्यतीतानि कियन्ति वः।
प्रारभ्य जन्मतोऽब्दानि' प्रोचुस्ते 'पञ्चविंशतिः' ॥ २३६ ॥

* * *

अथ पुंस्कोकिलालापकल्पामयमकल्पयत्।
श्रीशाहिः पुण्यकान्तारसहकारतरुमिदम् ॥ २३७ ॥
'लक्षणानि निरीक्ष्यन्ते क्षोणिरक्षोक्षमाणि ते।
प्रोल्लसच्चारुतारुण्यो भगवन्! भासते भवान् ॥ २३८ ॥
वयसीदृ(?)ततस्ताम्रतरुणीकरणोचिते।
सौख्यं विषयिकं त्यक्त्वा किमात्मा तपसेऽर्पितः?' ॥ २३९ ॥
अथ दन्तांशुसन्दोहच्छद्मना देहिनीमिव।
अवर्त्तयद्गिरं रङ्गन्मृदङ्गाभध्वनिर्मुनिः ॥ २४० ॥
'नवे वयसि या दीक्षा नैव हास्याय सा सताम्।
न हि पीयूषपानेऽपि प्रस्तावः प्रेक्षते बुधैः ॥ २४१ ॥
तारुण्यं वा जरा वाऽस्तु वास्तवः कस्तपःक्षणः।
यत्र वा तत्र वा मृत्युरनवस्थो हि देहिनाम् ॥ २४२ ॥
राजन्! जरसि शक्तिः क्व क्व च शक्तिं विना तपः।
परिव्रजन् जनस्तस्यां बोधनयति मोहताम् ॥ २४३ ॥
शक्तिकार्याणि कार्याणि जरायां प्रारभेत यः।
तस्य प्रहस्यते बुद्धिः पलितच्छलतस्तया ॥ २४४ ॥
अनादिसिद्धदुष्कर्मद्वेषिसंघातघातकम्।
इदमाद्रियते धीरैः खड्गधारोपमं तपः ॥ २४५ ॥

ज्ञानचक्षुषि नैर्मल्यं तत्त्वातत्त्वविलोकनम् ।
तपस्तपनवद्दत्ते तमःशमनतः सताम्' ॥ २४६ ॥
कृतकादम्बरीपानविघूर्णितविलोचनः ।
भूयः प्रत्याह भूपस्तान् भीष्मगम्भीरया गिरा ॥ २४७ ॥
'प्रवर्द्धमाने तारुण्ये मीनकेतनसद्मनि ।
अत्यन्ततरलं चेतः कथं स्थैर्यमुपैति वः?' ॥ २४८ ॥
सिद्धिचन्द्रैस्ततः प्रोचे 'ज्ञानेनैतत् स्थिरीभवेत् ।
अन्यैरपि यथा व्यालोऽङ्कुशेनाकृष्य रक्षते' ॥ २४९ ॥
अभ्यधात् पुनरुर्वीशो 'भवदुक्तमिदं मया ।
सम्यक्तया कथं ज्ञातुं शक्यं तद् ज्ञानमन्तरा?' ॥ २५० ॥
अभाणि भूयस्तैरेवं 'नात्र ज्ञानमपेक्ष्यते ।
भूस्वर्गिणां भवद्भोज्याद् यथास्ति विमुखं मनः ॥ २५१ ॥
अप्यस्माकं तथैवाऽऽस्ते विषयेभ्यः पराङ्मुखम् ।
अलब्धतद्रसास्वादवतामाजन्मतो मनः ॥ २५२ ॥
स्वकान्तं चानुयातीनां योषितां स्वजनादितः ।
विरक्तं ज्ञायते चित्तं ज्वलने ज्वलनाञ्जनैः ॥ २५३ ॥
परब्रह्मणि लीनानां निलीनानां शमाम्बुधौ ।
शक्रचक्रिष्वदीनानां मीनानां शर्मनीरधौ ॥ २५४ ॥
शुद्धमार्गाध्वनीनानां नवीनानां गुणार्जने ।
परोपकृत्यधीनानां पीनानां पुण्यकर्मणि ॥ २५५ ॥
परिग्रहविहीनानां मदीनानामभिग्रहे ।
मुनीनामात्मनीनानामीशानां त्रिदशामपि ॥ २५६ ॥
विरक्तं विषयग्रामात्तथा चेतस्तपस्विनाम् ।
नितान्तनिःस्पृहत्वादिगुणैरेवानुमीयते' ॥ २५७ ॥
इत्युक्ते तदभिप्रायं जानन् राजाऽनुतस्थिवान् ।
आनन्दमग्नो रोमाञ्चस्तोमाञ्चिततनुश्चिरम् ॥ २५८ ॥

❀ ❀ ❀

मञ्जरीरूपवृक्षस्य पुष्पेषोरिव कामिनी ।
प्रभासौभाग्यरत्नस्य लक्ष्मीर्लावण्यवारिधेः ॥ २५९ ॥
तदग्रमहिषी नूरमहल्लास्ते ऽतिवल्लभा ।
जितं भासेव वक्त्रेन्दोर्नासीद्यस्याः स्मितं बहिः ॥ २६० ॥ युग्मम् ।
अङ्गुलिपल्लवोल्लासि नखांशुकुसुमाञ्चितम् ।
असेवि भूपदृग्भृङ्गैर्यस्या बाहुलतायुगम् ॥ २६१ ॥

काञ्चीपट्टो नितम्बेऽस्ति मदर्थःस्थैर्येऽपि नो मयि ।
इतीव दुःखतस्तस्या मध्यदेशः कृशोऽभवत् ॥ २६२ ॥
अभितः शोभते यस्याः श्यामला कुन्तलावलिः ।
विधुभ्रमेण वक्त्रस्य रजनीवानुचारिणी ॥ २६३ ॥
वीज्यमानस्य विश्वेन लोचनाचलचामरैः ।
यत्कण्ठो मुखराजस्य वेत्रासनमिवेक्ष्यते ॥ २६४ ॥
भ्राजेऽनुमीयमाना या विपंची मधुरस्वरैः ।
मुक्तावलीव भारत्या यन्मुखे दशनावली ॥ २६५ ॥
अब्ज एव क्रमौ यस्या न हंसो यदसेवत ।
गतिनिर्जयलज्जैव जानीमस्तत्र कारणम् ॥ २६६ ॥
इत्यस्याः सकले गात्रे महान् दोषोऽयमेव हि ।
अपि वर्षशतैस्तृप्तिः पश्यतः कस्यचिन्नहि ॥ २६७ ॥
सत्यप्यन्तःपुरे तस्यां रेमे क्ष्मापतिमानसम् ।
लक्ष्ये नक्षत्रलक्षेऽपि चक्षुश्चन्द्रतनौ व्रजेत् ॥ २६८ ॥
तदा विश्वम्भराभर्तुः साऽब्रवीत् प्राणवल्लभा ।
'तारुण्ये क्व मनःस्थैर्यमसंभाव्यमिदं वचः' ॥ २६९ ॥
तद्वाक्यश्रवणाज्जाताहंकारैस्तैरभाणि सा ।
'बलक्षाधिपतिः किं न तारुण्येऽभूज्जितेन्द्रियः ॥ २७० ॥

तथा चाहुः—

'सोलह सहस महेलिआं, तुरी अठारह लक्ख ।
सांईकेरइ कारणइं, छोड्या सहर विलक्ख ॥ २७१ ॥
विशेषः कोऽपि नैवास्ति तारुण्य-तद्भावयोः ।
पूर्वोपार्जितपुण्यस्य प्रभावादेव तद्भवेत् ॥ २७२ ॥
आबालतो मनःस्थैर्यं केषाञ्चिन्न तपस्विनाम् ।
मक्षिकाणामिव व्योम्नि गमनं नैव हस्तिनाम् ॥ २७३ ॥
ज्यायांसः सन्ति भूयांसो विषयासक्तचेतसः ।
अतो हि चेतसः स्थैर्ये वृद्धत्वं न प्रयोजकम्' ॥ २७४ ॥
स्मयाभिभूता भूयोऽपि सैव तान् प्रत्यभाषत ।
'योगस्तु भुक्तभोगानां नृणां प्रान्ते प्रकीर्त्तितः ॥ २७५ ॥
भुक्त्वैव विविधान् भोगान् ये त्यजन्ति त एव हि ।
लोके स्युस्त्यागिनः सम्यग् नान्ये त्वप्राप्ततद्रसाः ॥ २७६ ॥
अलब्धविषयास्वादा ये भवन्ति तपस्विनः ।
ते स्युर्वनेचरप्रख्यास्तत्त्वातत्त्वविदो नहि ॥ २७७ ॥
अरुचिः स्यान् नृणां शश्वद् भुज्यमाने च वस्तुनि ।
तथैव भुक्तभोगस्य विषयेषु न चान्यथा ॥ २७८ ॥

अदृष्टे वस्तुनि प्रायो मनो धावति सत्वरम् ।
तथैवाभुक्तभोगस्य मनस्तत्रैव गच्छति' ॥ २७९ ॥
अथाभ्यधात् सुधापूरसोदरं सुगुरुर्गिरम् ।
'त्वदुदीरितवाक्यस्य विपर्यासोऽस्ति साम्प्रतम् ॥ २८० ॥
कृतादिषु जना भुक्तभोगिनो योगिनोऽभवन् ।
कलौ तु योगिनः प्रायः समजायन्त भोगिनः ॥ २८१ ॥
अपलितमुण्डं पश्या वानप्रस्था भवन्ति कृतयुगजाः ।
कलिजन्मानः पलिते समग्रदेहेऽपि विषयार्त्ताः ॥ २८२ ॥
दृश्यन्तेऽद्य कनीयांसो व्रतनिर्वाहकारिणः ।
ज्यायांसस्तु प्रपद्यापि व्रतं तत्रातिकातराः' ॥ २८३ ॥
ततः श्रीमज्जिहांगीरः पुनस्तानभ्यधादिति ।
'सर्वमेतन्मयाऽश्रावि त्वद्वचो युक्तिसंयुतम् ॥ २८४ ॥
मुनिमार्गानुगामित्वं साम्प्रतं साम्प्रतं न ते ।
विलोक्यते गन्धफलीप्रख्येयं यत्तनुस्तव ॥ २८५ ॥
मालतीमुकुले युक्तं किं कुकूलाग्निमोचनम् ।
योग्यं वा नलिनीनाले कचित् क्रकचदारणम् ? ॥ २८६ ॥
वरं क्षौमाम्बरे किं स्यात् कर्करोत्करबन्धनम् ।
उच्चैर्मर्षिचूर्णस्योचितः क्षेपः किमीक्षणे ? ॥ २८७ ॥
काचकुम्भे किमु श्रेष्ठं हठान्मुद्गरताडनम् ।
किं रम्भास्तम्भगर्भेऽसिघातः पातः सतां मतः ? ॥ २८८ ॥
अस्मिन् शिरीषपुष्पाग्रसुकुमारे कुमार ! किम् ।
केशोन्मूलनमुख्यानि दुःखानीष्टानि तेऽङ्गके ? ॥ २८९ ॥
आश्रमेषु च सर्वेषु ज्यायान् गृह्येव कीर्त्तितः ।
प्रवर्त्तनं यतोऽन्येषां तदाधारतया स्थितम् ॥ २९० ॥
वाहिनीभिः परिवृतः समुद्रस्त्वं समुद्रवत् ।
तिष्ठ मत्सूनुसादृश्यमुद्वहन् मम सन्निधौ ॥ २९१ ॥
मृगेक्षणाभिः संसारसारता ज्ञायते जने ।
अतः सदारतां तावत् स्वीकुरुष्व मदुक्तितः ॥ २९२ ॥
यतः पुत्रादिसंपत्तौ साफल्यं जन्मनो भवेत् ।
पादपो हि फलाभावे ग्रामीणैरपि निन्द्यते ॥ २९३ ॥
तृणादपि लघु प्रोक्ता धान्यत्वग्मार्गणास्ततः ।
अतो हि तुच्छताहेतु कर्म कुर्वन्न लज्जसे ॥ २९४ ॥
अहो रूपमहो सत्त्वमहो विद्यापरिश्रमः ।
भवत्तु सर्वशोभाकृन्मुक्त्वैकां पादचारिताम् ॥ २९५ ॥

जगत्कर्त्रा कृतं सर्वमस्माकं मुक्तिहेतवे ।
तन्निर्देशं प्रकुर्वाणा अग्रेऽपि सुखिनो वयम् ॥ २९६ ॥
इहापि दुःखिनो यूयं परत्रापि च दुःखिनः ।
भवितास्थेश्वरप्रोक्तमार्गातिक्रमतत्पराः' ॥ २९७ ॥
इति यौक्तिकमाकर्ण्य सुरत्राणोदितं वचः ।
ते पुनर्धैर्यमालम्ब्याविलम्बेनोत्तरं ददुः ॥ २९८ ॥
'आदिष्टं सत्यमेवैतत् प्रियं च प्रभुभिः परम् ।
रक्तानां क्षोभयेच्चित्तं विरक्तानां तु न क्वचित्' ॥ २९९ ॥
इति व्याहृतिमाकर्ण्य धीधनस्याथ भूधनः ।
स्फारविद्वचमत्काररचनं वचनं जगौ ॥ ३०० ॥
'मन एव मनुष्याणां प्रमाणं पुण्यपापयोः ।
मनो विना विधाने च न काचिन्नियमक्षतिः ॥ ३०१ ॥
अत्रापि कश्चिद्दोपश्चेत् प्रायश्चित्तेन तं पुनः ।
निराकुर्याल्लङ्घनोत्थं कार्श्यं पथ्यादनादिव ॥ ३०२ ॥
उत्सर्गश्चापवादश्च यतिधर्मेऽप्युभौ स्मृतौ ।
सर्वैरपि यतः सार्वैस्तदैकान्तग्रहो मुधा ॥ ३०३ ॥

किञ्च–

स्याद्वावाद एव सर्वत्र युक्तः स्याद्वादवादिनाम् ।
तेपामेकान्तवादस्तु मिथ्यात्वमिति गीयते ॥ ३०४ ॥
त्यक्त्वा कदाग्रहं धीमन्! उरीकृत्य च मद्वचः ।
यथेच्छं भुङ्क्ष्व सौख्यानि मुह्येत् कः स्वहिते सुधीः ?' ॥ ३०५ ॥
युक्त्या साक्षेपमित्युक्तेऽर्हन्मतज्ञेन शाहिना ।
प्रोचिरे निष्प्रकम्पास्ते स्वीयधर्मैकचेतसः ॥ ३०६ ॥
'वाच्यमेतद्धि निखिलं कातरं पुरुषं प्रति ।
न प्राणान्तेऽप्यतिचरेद् धर्मं धीरः पुनर्मनाक् ॥ ३०७ ॥
अत्यल्पादप्यतीचाराद् धर्मस्यासारतैव हि ।
अंह्रिकण्टकमात्रेण पुमान् पङ्गूयते न किम् ॥ ३०८ ॥
यच्छुद्ध्यै क्रियते प्रायश्चित्तं तत् त्याज्यमादितः ।
प्रक्षालनीयो यस्तस्य पङ्कस्यास्पर्शनं वरम् ॥ ३०९ ॥
उत्सर्गमार्गेऽशक्तस्यापवादः प्रतिपाद्यते ।
अपवादोऽपवादाय शक्तस्य तु सुनिश्चितम् ॥ ३१० ॥
स्याद्वादोऽपि न निर्दिष्टः पापकृत्ये कृतात्मभिः ।
स्याद्वादस्यापि नैकान्तवादः स्याद्वादिनां मतः ॥ ३११ ॥

भवे भवे प्रियापुत्रसंयोगान् लब्धपूर्व्यहम् ।
न तु धर्मं क्वचित्तं तत् त्यजेयं तत्कृते कथम् ॥ ३१२ ॥
सर्वेभ्योऽपि प्रियाः प्राणास्तेऽपि यान्त्वधुनापि हि ।
न पुनः स्वीकृतं धर्मं खण्डयाम्यल्पमप्यहम्' ॥ ३१३ ॥
'धिक् ! कदाग्रहमेतस्य प्राज्ञस्यापि यतोऽमुना ।
अनल्पोऽल्पकृतेऽनर्थः स्वस्यारेभे स्वशत्रुणा' ॥ ३१४ ॥
इत्याद्युक्तेऽपि मन्त्र्याद्यैः स्वधर्मे निर्भरं दृढाः ।
मेनिरे तद्वचो नातः क्रुद्धस्तान् नृपतिर्जगौ ॥ ३१५ ॥
'रे ! रे ! मामवजानासि, न मे जानासि विक्रमम् ? ।
रुष्टः साक्षात् कृतान्तोऽस्मि तुष्टः कल्पद्रुमः पुनः ॥ ३१६ ॥
कदाग्रहविषद्रोस्तत् फलमाप्नुहि संप्रति' ।
इत्युक्त्वाऽऽनाययद् व्यालं करालं कालवन्नृपः ॥ ३१७ ॥
सुस्निग्धाञ्जनपुञ्जाभः प्रवर्षन् मदवारिभिः ।
दन्तद्युतिलसद्विद्युत्तडित्वानिव मूर्त्तिमान् ॥ ३१८ ॥
समासो गगनस्येव व्यासो विन्ध्यगिरेरिव ।
महाक्रूरत्वदीक्षादिगुरुः पितृपतेरिव ॥ ३१९ ॥
शुण्डावलितदन्ताग्रो गर्जितर्जितदिग्गजः ।
दृग्गोचरस्य नामापि नाशयन् गात्रघट्टनैः ॥ ३२० ॥
पुराट्टश्रेणिकायुग्मकूलंकषमहारयः ।
हिंसामहापगापूर इव दूरसमुन्नतः ॥ ३२१ ॥
आधोरणैस्तदा तत्रानीतः कोऽपि तदाज्ञया ।
भृङ्गैर्गीतयशा लुब्धैर्दानवारिणि वारणः ॥ ३२२ ॥—पञ्चभिः कलापकम् ।
तद्भिया स्तम्भमुन्मुल्य गजा गर्वमिवात्मनः ।
पलायांचक्रिरे न्यस्य कर्णेभ्योंह्रिषु चापलम् ॥ ३२३ ॥
पलायमाना हरयो रयोपहतमारुताः ।
ललङ्घिरे मिथो मार्गरोधक्रोधसमुद्धुराः ॥ ३२४ ॥
क्षणत्करोत्यपि जगन्न येषां पतितं दृशि ।
वीरैस्तैरप्यहो ! हस्तस्रस्तशस्त्रैः पलायितम् ॥ ३२५ ॥
'गार्हस्थ्यमुररीकृत्य भुङ्क्ष्व भोगान् पुरंध्रिभिः ।
देशाधिपत्यं मन्यस्व गृहाणाश्वगजान् पुनः ॥ ३२६ ॥
इमां शेषामिवाशेषां मदाज्ञां कुरु मुर्द्धनि ।
न चेत् त्वाममुना नेता कृतान्तातिथितामहम्' ॥ ३२७ ॥
राज्ञेत्युक्तेऽथ ते प्रोचुः—'दुःखं दुःसहमप्यदः ।
धर्महेतुतयाऽस्माकं गुणायैव भविष्यति' ॥ ३२८ ॥

'मूढः सुदृढनिर्घातमत्यन्तास्फलनं विना ।
न प्रत्येतीति मौढ्यस्य तस्य पश्याधुना फलम्' ॥ ३२९ ॥
इत्युक्त्वा क्षितिपः कोपात् प्रचण्डं प्रेरयद् द्विपम् ।
नदन्नकालकल्पान्तकालमेघमिवोत्कटम् ॥ ३३० ॥
आपूर्णगगनोन्मग्नभुवनश्रवणेन्द्रियः ।
तदाऽभूत् तुमुलः कोऽपि दिग्भित्तिभ्रंसभूरिव ॥ ३३१ ॥
तथाऽप्यक्षुभितान् दृष्ट्वा तानत्यन्तं व्यसेष्मयीत् ।
आदिशच्च वने वासं निजाज्ञोल्लङ्घनान्नृपः ॥ ३३२ ॥
एतदप्युररीकृत्याप्रकम्पास्ते प्रतस्थिरे ।
श्रीशाहिश्चेति सर्वत्र स्फुरन्मानमलीलिखत् ॥ ३३३ ॥
'मद्देशवर्त्तिभिश्चान्यैर्वने स्थेयं मुमुक्षुभिः ।
निःस्पृहाणां यतीनां यत् स्थितिस्तत्रैव युज्यते' ॥ ३३४ ॥
अगण्यपुण्यसौभाग्यशालिनः स्वीयसन्निधौ ।
सत्कृत्य शाहिना श्रीमद्वाचकेन्द्रास्तु रक्षिताः ॥ ३३५ ॥
भव्यानां बोधिबीजानि कुर्वन्तो निर्मलानि ते ।
सिद्धिचन्द्रास्तु संप्राप्ताः श्रीमन्मालपुरं पुरम् ॥ ३३६ ॥
तत्रत्यसङ्घविज्ञप्तैस्तदध्यक्षाग्रहाच्च ते ।
पर्जन्यावस्थितिं तत्र चक्रिरे निरुपद्रवम् ॥ ३३७ ॥

अन्येद्युः श्रीसुरत्राणः सभासीनः शुभाशयः ।
अद्राक्षीद् वाचकान् वीक्षापन्नानिव मुहुर्मुहुः ॥ ३३८ ॥
'कस्मात् कश्चिन् महान् खेदः श्रीमतामद्य दृश्यते' ? ।
अप्राक्षीच्चेति सस्नेहं तानाहूय स्वसन्निधौ ॥ ३३९ ॥
प्रोचुस्ते 'भववासेन खेदो नः परमार्थतः ।
निःस्पृहाणां मुमुक्षूणामन्यः कः स्याद् विरागिणाम् ? ॥ ३४० ॥
दूरस्थशिष्यरत्नस्य वियोगक्रमसम्भवः ।
तथाप्येष महाराज ! साम्प्रतं मम बाधते' ॥ ३४१ ॥
इति श्रीवाचकप्रोक्तं श्रुत्वा स्मृत्वा च भूविभुः ।
स्वधर्मे दृढतां तेषामिति चित्ते व्यचिन्तयत् ॥ ३४२ ॥
धिग् ! मां मोहवशित्वेन तद्दर्शननिरादरम् ।
घूकनेत्रमिव ध्वान्तमित्रत्वेनार्कनिःस्पृहम् ॥ ३४३ ॥
स्वागोविषण्णस्तत्रैव निषण्णः स प्रसन्नदृग् ।
आह्वातुं सिद्धिचन्द्राणां स्फुरन्मानमलीलिखत् ॥ ३४४ ॥
तेऽपि सम्प्राप्य तत् तूर्णं शुभोदर्कमिवात्मनः ।
विहगैर्वर्द्धितोत्साहाः पुरात् तस्मात् प्रतस्थिरे ॥ ३४५ ॥

क्रमाच्च प्राविशन्नुच्चैर्नानाश्चर्यावहैर्महैः ।
उग्रसेनपुरं तेषां कीर्त्तयश्च दिगन्तरम् ॥ ३४६ ॥

ॐ

अथो ते मेदिनीमन्तं मिलन्ति स्म शुभेऽहनि ।
सोऽपि संवीक्ष्य तानेवं प्रशशंस मुहुर्मुहुः ॥ ३४७ ॥
'धन्यानामपि धन्यस्त्वं श्लाघ्यः श्लाघायुजामपि ।
विश्वेऽपि त्वत्समः कोऽस्तु सात्त्विकैकशिरोमणिः ॥ ३४८ ॥
मान्यानामपि मान्यश्च नान्यस्त्वत्तो जगत्यपि ।
धर्मे विपरिणामस्ते यतो नैतावताऽप्यभूत् ॥ ३४९ ॥
दुश्चेष्टितं तदेतन् मे मर्षयामर्षवर्जित ! ।
सन्त एव यतः सर्वसहायां तद्गुणस्पृशः' ॥ ३५० ॥
लब्धवर्णास्ततस्तेऽपि तं निर्वेदपरं नृपम् ।
आचक्षिरे विचाराब्धिचश्चच्चन्द्रिकया गिरा ॥ ३५१ ॥
'नापराद्धं त्वया किन्तु कृतिन् ! उपकृतिः कृता ।
तव साहाय्यमाहात्म्याद् यद् दुष्कर्म क्षितं मया ॥ ३५२ ॥
अपराधस्त्वया हन्त ! क्षन्तव्यः किन्तु मामकः ।
यत्तवैवं बभूवाहं दुष्कर्मार्जनकारणम्' ॥ ३५३ ॥
भूयोभूयस्ततस्तेषां जगाद जगतीपतिः ।
रोमहर्षाङ्कुराकीर्णो हर्षाश्रुकणमिश्रदृक् ॥ ३५४ ॥
'किञ्चिचाख्याहि कृत्यं मे सद्यः संपादये यथा' ।
इत्युक्ते क्षितिपेनोच्चैस्तेऽपि तूर्णं तमभ्यधुः ॥ ३५५ ॥
'पूर्वं ये मुनयः स्वाम्यादेशान्निर्विषयीकृताः ।
पुनरायान्तु ते सर्वे प्रसद्यैतत् प्रदीयताम् ॥ ३५६ ॥
पूर्ववद् विषयेऽस्माकं' तन्निशम्यावदन् नृपः ।
'यथेष्टमेते तिष्ठन्तु' पत्रं कृत्वाऽथ दत्तवान् ॥ ३५७ ॥
प्रतिग्रामं प्रतिद्रङ्गं ततःप्रभृति पूर्ववत् ।
समीयुः साधवः श्राद्धकृतैश्चित्रावहैर्महैः ॥ ३५८ ॥

ॐ

॥ इत्युपाध्यायश्रीसिद्धिचन्द्रगणिविरचिते महोपाध्यायश्रीभानुचन्द्रगणिप्रभावकपुरुषचरिते महाकाव्ये पातिशाहश्रीजिहांगीरप्रसन्नप्रदत्तकमनीयकामिनीसमन्वितपञ्चसहस्रतुरगाधिपत्यानङ्गीकारकरणवन-गमन-पुनरपि श्रीशाहिप्रदत्तबहुमानस्फुरन्मानमेवडाप्रेषणपूर्वकव्यावृत्त्यागमन-महोपाध्यायश्रीभानु-चन्द्रगणिद्वारा श्रीशाहिमिलन-सर्वत्र श्रीशाहिनिर्विषयीकृतसमस्तसाधुजन पुनरपि सर्वत्र सुखा-वस्थानविहारकरणस्फुरन्मानविधापनादिवर्णनो नाम तृतीयः (चतुर्थः) प्रकाशः ॥ छ ॥

---

॥ महोपाध्याय श्री १९ श्रीभानुचन्द्रगणिशिष्यसकलपण्डितशिरोमणिपण्डितश्रीदेवचन्द्रगणिपण्डित-श्रीविवेकचन्द्रगणिशिष्यमुनिगुणचन्द्रेण लिखितः ॥

---

# APPENDIX I

# भानुचन्द्रकृत-ग्रन्थ-प्रशस्त्यादि ।

## १ सूर्यसहस्रनामस्तोत्रम्.

॥ ६० ॥ ॐ नमः श्री सूर्याय ।

नमः श्रीसूर्यदेवाय सहस्रनामधारिणे । कारिणे सर्वसौख्यानां प्रतापाद्भुततेजसे ॥ १ ॥

आदिदेव, आदित्य, आदितेजाः, आप, आचारतत्परः, आयुः, आयुष्मान्, आकार, आकाश, आलोककृत, आमुक्त, ॐकार, आरोग्य, आरोग्यकारण, आशुग, आतप, आतपी, आत्मा, आत्रेय, असह, असंगगामी, असुरांतक, उडुपति, अहस्पति, अहिममान्(पा० अहिमान्), अहिमांशुभृतः-तिः, अहिमकरः, अहिमरुक्, अहिमरुचिः, अहिंसक, अहर्मणि, उदारकर्म्मा, अद्वितीय, उदीच्यवेश, अपांपतिः, अभयप्रदः, अभिनंदितः, अभिष्टुतः, अब्जहस्तः, अब्जबांधवः, अपराजित, अप्रमेय, अज, उच्चैः, अच्युत, अजय, अचल, अचिन्त्य, अचिन्त्यात्मा, अचर, अजित, अविचिन्त्यवपुः, अव्यय, अव्यंगधारी, ऊर्जित, अयोनिज, ऐंधन, एक, एकाकी, एकचक्ररथ, एकनाथ, ईश, ईश्वर, अक्लिष्टकर्मकृत्, उग्ररूप, अग्नि, अकिंचन, अक्रोधन, अक्षर, अलंकार, अलंकृत(पा० अलंकृत्), अमाय, अमेयात्मा, अमरप्रभु, अमरश्रेष्ट, अमित, अमितात्मा, अणु, इन, अनाद्यंत, अंधकारापह, इन्द्र, अंभ, अंभोजबन्धु, अंबुद, अंबरभूषण, अनेक, अंगारक, अंगिरा, अनल, अनलप्रभ, अनिमित्तगति, अनंग, अन्न, अनन्त, अनिर्देश्य, अनिर्देश्यवपुः, अंशु, अंशुमान्, अंशुमाली, अनुत्तम, अरिहा । १०० । अरहन्, अरविंदाक्ष, अर्यमा, अर्क, अरिमर्दन, अरुणसारथि, अश्वत्थ, अशीतरश्मि, उष्णकर, अश्विन, अशिशिर, अतुलद्युति, अतीन्द्र, अतीन्द्रिय, उत्तम, उत्तर, साधु, सावर्ण-र्णी, सावित्री, सविता(पा० साविता), सायन, सौप्य(ख्य)सागर, साम, सामवेद, सारंगधन्वा, सहस्राक्ष, सहस्रांशु, सहस्रधामा, सहस्रदीधितिः, सहस्रपात्, सहस्रचक्षुः, सहस्रश्रोत्रः, सहस्रकरः, सहस्रकिरण, सहस्ररश्मि, सदायोगी, सदागति, सुधर्मा, सिद्धः, सिद्धकार्य, सभाजित्, सुप्रभ, सुप्रदीपक, सुप्रभावन्, सुप्रभाकर, सुप्रिय, सुपर्ण, सप्तार्चिः, सप्ताश्वः, सप्तजिह्व, सप्तलोकनमस्कृत, सप्तमीप्रिय, सप्तिमान्, सप्तसप्ति, सप्ततुरग, स्वस्वाहाकार, सुवाहन, स्वाहाभुक्, स्वाचार, सुवाक्, सुसंयुक्त, सुस्थित, स्वजन, सुवेश, सूक्ष्म, सूक्ष्मधी, सोम, सूर्य, सुवर्चा, सुवर्ण, स्वर्ण, स्वर्णरेता, सुविशिष्ट, सुवितान, सैंहिकेयरिपु, स्वयंविभु, सुखद, सुखप्रद, सुखी, सुखसेव्य, सुकेतन, स्कंद, सुलोचन, समाहितमति, समायुक्त, समाकृति, सुमहाबल, समुद्र, सुमूर्त्ति, सुमेधा, सुमनाः, सुमनोहर, सुमंगल, सुमति, सुमत, सुमतिजय, सनातन, संसारार्णवतारक । २०० । संसारगतिविच्छेत्ता, संसारतारक, संहर्त्ता, संपूर्ण, सम्प्रच, सम्प्रकाशक, सम्प्रतापन, सञ्चारी, सञ्जीवन, संयम, संविभाग्य, संवर्त्तक, संवत्सर, संवत्सरकर, सुनय, सुनेत्र, सङ्कल्प, सङ्कल्पयोनि, संतापन, संतानकृत्, संतपन, सुराध्यक्ष, सुरावृत, सुरारिह, सुरारि, सर्वसद, स्वर्भानु, सर्वद, सर्वदर्शी, सर्वप्रिय, सर्ववेदप्रगीतात्मा, सर्ववेदालय, सर्वरत्नमय, सुरपूजित, सर्वलोकप्रकाशक, सुरपति, सर्वशत्रुनिवारण, सर्वतोमुख, सर्व, सर्वात्मा, सर्वस्व, सर्वस्वी, सर्वद्योत, सर्वद्युतिकर, सर्वजितांबर, सर्वोदधिस्थितिकर, सर्ववृत, सर्वमदन, सर्वप्रहरणायुध, सर्वप्रकाशक, सर्वग, सर्वज्ञ, सर्वकल्याणभाजन, सर्वसाक्षी, सर्वशास्त्रभृतांवर, सुरेश, सर्ग, सर्गादिकर, सुकार्यज्ञ, स्वर्गद्वार, स्वर्गप्रतर्दन, स्रग्वी, सुरमणि, सुरनिभाकृति, सुरश्रेष्ट, सृष्टि, स्रष्टा, श्रेष्ठात्मा, सृष्टिकृत्, सृष्टिकर्त्ता, सुरथ, सित, स्थावरात्मक, स्थानरथूलदृक्, स्थविर, स्थित, स्थेय, स्थितिमान्, स्थितिहेतु, स्थिरात्मक, स्थितिस्थेय, स्थितिप्रिय, सुतप, सत्य, स्तोत्र, सत्यवान्, सत्य, सत्यसंधि, हुव, होम, होमांतकरण, होता, हयग, हेलि, हिमद, हंस, हर, हरि, हरिदश्व । ३०० । हरिप्रिय, हर्यश्व, हरी, हिरण्यगर्भ, हिरण्यरेता, हरिताश्व, हुत, हुताहुति, द्यौः, दुःस्वप्नाशुभनाशन, धराधर, धाता, ध्वांतापह, ध्वांतसूदन, ध्वांतविद्वेषी, ध्वांतहा, धूमकेतु, धीमान्, धीर, धीरात्मा, धन, धनाध्यक्ष, धनद, धनंजय, धन्वन्तरि, धन्य, धनुर्धर, धनुष्मान्, ध्रुव, धर्म्म, धर्म्माधर्म्मप्रवर्त्तक, धर्माधर्म्मवरप्रद, धर्म्मद, धर्म्मध्वज, धर्म्मवृक्ष, धर्म्मवृत, धर्म्मवत्सल, धर्मकेतु, धर्मकर्त्ता, धर्म्मनित्य, धर्म्मरत, धरणीधर, धर्म्मराज, एतावपद्मप्रतिम(पद्मप्रतिम), द्युतिकर, द्युतिमान्, दिवा, द्वादशात्मा, द्वापर, दिवापुष्ट, दिवापति, दिवाकर, दिवाकृत, दिवस्पति, दिविस्थित, दिव्यवाह, दिव्यवपुः, दिव्यरूप, द्युवृक्ष, दयालु, देहकर्त्ता, दीधितिमान्, दीप, दीप्तांशु, दीप्तदीधिति, देव, देवदेव, द्योत, द्योतन, द्योतितानल, दिक्पति, दिग्वासा, दक्ष, दिनाधीश, दिनबन्धु, दिनमणी, दिनकृत, दिननाथ, दुराराध्य, पापनाशन, पावन, भास्वान्, भास्कर, भासंत, भामत, भासित, भासितात्मा, भाग्य, भानु, भानेमि, भानुकेसर, भानुमान्, भानुमान्(?), भानुरूप, बहुदायक, भूधर, भवद्योत, भूपति, भूव्य । ४०० । भूपणोद्भासी, भोगी, भोक्ता, भुवनपूजित, भुवनेश्वर, भूष्णु, भूतादि, भूतांतकरण, भूतात्मा, भूताश्रय, भूविद, भूतभव्य, भूतविभु, भूतप्रभु, भूतपति, भूतेश, भूषण, भयांतकरण, भीम, भीमत, भर्ग, भगवान्, भक्तवत्सल, बहुमंगल, बहुरूप, भूताहार, भिषग्वर, बुद्ध, बुद्धिवर्द्धन, बुद्धि, बुद्धिमान्, भव, पद्महस्त, पद्मपाणि, पद्मबन्धु, पद्मयोगी, पद्मयोनि, पद्मोदरनिभानन, पद्मेक्षण, पद्ममाली, पद्मनाभ,

पद्मिनीश, विभावस, विचित्ररथ, पूतात्मा, पवित्रात्मा, पूषा, व्योममणि, पीतवासा, पक्षवल, बलभृत्, बलप्रिय, बलवान्, बली, बलिनांवर, पिनाकधृक्, बिन्दु, बंधु, बंधहा, पुंडरीकाक्ष, पुण्य-संकीर्त्तन, पुण्यहेतु, पर, प्राक्षयान, परावर, परावरज्ञ, परायण, प्राज्ञ, पराक्रम, प्राणधारक, प्राणवान्, प्रांशु, प्रसन्नात्मा, प्रसन्नवदन, प्रज्ञा, प्रज्ञाचर्यवान्, प्रद्योत, प्रद्योतन, प्रभावन, प्रभाकर, प्रभंजन, परप्राण, परपुरंजय, प्रजाद्वार, प्रजापति, प्रजन, पर्जन्यप्रिय, प्रियदर्शन, प्रियकारी, प्रियकृत्, प्रियंवद, प्रियंकर, प्रयत, प्रीति, प्रयतात्मा, प्रीतात्मा, प्रयतानंद, प्रीतिमना, प्रकाशन। ५००। पुरुषोत्तम, प्रकृति, प्रकृतिस्थिति, प्रलंबहार, परमोदार, परमेष्ठी, पुरंदर, प्रणतार्त्तिहा, प्रणतार्त्तिहर, परंतप, प्ररेता, प्रशांत, प्रशम, प्रतापन, प्रतापवान्, पृथ्वी, प्रथित, प्रत्यूह, वृषाकपि, पुरुप, वृपध्वज, विश्व, विश्वामित्र, विश्वंभर, पशुमान्, विश्वतापन, पिता, पितामह, पतग, पतंग, पितृद्वार, पुष्कलनिभ, बषट्कार, ज्यायान्, जामदग्न्यजित्, चारुचरित, जाठर, जातवेदा, छंदवाहन, योगी, योगीश्वरपति, योगनित्य, योगतत्पर, यो(ज्यो)तिरीश, जय, जीव, जीवानन्द, जीवन, जीवनाथ, जीमूत, जनप्रिय, जेता-जगत्, युगादिकृत्, युग, युगार्त्तव, जगदाधार, जगदादिज, जगदानन्द, जगद्दीप, जगज्जेता, चक्रबंधु, चक्रवर्त्ति, चक्रपाणि, जगन्नाथ, जगत्, जगतामंतकरण, जगतांपति, जगत्साक्षी, जगत्पति, जगत्प्रिय, जगत्पिता, यम, जनार्द्दन, जनानंद, चंडकर, जनेश्वर, जंगम, जनयिता, चराचरात्मा, यशस्वी, जिष्णु, जितावरीश, जितवपुः, जितेन्द्रिय, चतुर्भुज, चतुर्वेद, चतुर्वेदमय, चतुर्मुख, चित्रांगद, वासुकि, वासरेशिता, वासरस्वामी, वासरप्रभु, वासरप्रिय, वासरेश्वर, वाहनार्तिहर, वायु, वायुवाहन, वायुरत, वाग्विशारद, वाग्मी, वारिधि। ६००। वारण, वसुदाता, वसुप्रद, वसुप्रिय, वसुमान्, विसृज, विहारी, विहगवाहन, विहंग, विहंगम, विहित, विधि, विधाता, विधेय, वदान्य, विद्वान्, विद्योतन, विद्या, विद्यावान्, विद्याराज, विद्युत, विद्युत्वान्, विदिताशय, विपाप्मा, विभावसु, विभव, वचसांपति, विजय, विजयप्रद, विजेता, विचक्षण, विवस्वान्, विविध, विविधासन, वज्रधर, व्याधिहा, व्याधिनाशन, व्यास, वेदांग, वेदपारग, वेदभृत्, वेदवाहन, वेदवेद्य, वेदवित्, वैद्य, वेदकर्त्ता, वेदमूर्ति, वेदनिलय, व्योमग, विचित्ररथ, व्योममणि, वेगवान्, विगतात्मा, वीर, वैश्रवण, विगाही, विघ्नशमन, विघृण, विग्रह, विकृति, वक्ता, व्यक्ताव्यक्त, विगतारिष्ट, विमल, विमलद्युति, विमन्यु, विमर्खी(र्षी), विनिद्र, विराज, विराट्, बृहस्पति, बृहत्कीर्त्ति, बृहज्जेता बृहत्तेजा, वरद, वरदाता, वृद्धि, वृद्धिद, वरप्रद, वर्चस, विरूपाक्ष, विरोचन, वरीयान्, वरुण, वरनायक, वर्णाध्यक्ष, वरुणेश, वरेण्य-वरेण्यवृत्त, वृत्तिधर, वृत्तिचारी, विश्वामित्र, वृत्ति, वशानुग, विशाप(ख), विश्वेश्वर, विश्वयोनि, विश्वजित्, विश्ववित्, विशोक, विशेषवित्, विष्णु, विश्वात्मा, विश्वभावन, विश्वकर्मा, विश्वनिलय। ७००। विश्वरूपी, विश्वतोमुख, विशिष्ट, विशिष्टात्मा, विषाद, यज्ञ, यज्ञपति, काक, काल, कालानलद्युति, कालहा, कालचक्र, कालचक्रप्रवर्त्तक, कालकर्ता, कालनाशन, कालत्रय, कास, कामारि, कामद, कामचारी, कांक्षिक, कांति, कांतिप्रद, कार्यकारणावह, कारुणिक, कार्त्तस्वर, काश्यपेय, काष्टा, कपि, कुबेर, कपिल, गभस्तिमान्, गभस्तिमाली, कपर्द्दी, ख, खतिलक, खद्योत, खोल्का, खग, खगसत्तम, घर्मांशु, घृणी, घृणिमान्, कवि, कवच, कवची, गोपति, गोविन्द, गोमान्, ज्ञानशोभन, ज्ञानवान्, ज्ञानगम्य, ज्ञेय, केयूर, कीर्त्ति, कीर्त्तिवर्द्धन, कीर्त्तिकर, केतुमान्, गमनकेतु, गगनमणि, कला, कल्प, कल्पांत, कल्पांतक, कल्पांतकरण, कल्पकर, कल्पकृत्, कल्पक, कल्पकर्त्ता, कलिपतांवर, कल्याण, कल्याणकर, कल्याणकृत्, कलिकालज्ञ, कल्पवपु, कल्मपापह, कमलाकरबोधन, कमलानंद, गुण, गन्धवह, कुण्डली, गणपति, कञ्चुकी, गुणवान्, गणेश, गणेश्वर, गणनायक, गुरुगृहद, गृहपुष, ग्रहपति, ग्रहेश, ग्रहेश्वर, ग्रहनाथ, ग्रहनक्षत्रमंडन, क्रियाहेतु, क्रियावान्, गरीयान्, किरीटी, कर्म्मसाक्षी, करण, किरण, कर्णसू, कृष्णवासा, कृष्णवर्त्मा, कृतकर्म्मा। ८००। कृताहार, कृतांतसू, कृतातिथि, कृतात्मा, कृतविश्व, कृती, कृत्यकृत्य, कृतमंगल, कृतिनांवर, क्षांति, क्षुधाज, क्षेम, क्षेमस्थिति, क्षेमप्रिय, क्षमा, कश्मलापह, गतिमान्, लोहितांग, लोकाध्यक्ष, लोकालोकनमस्कृत, लोकबंधु, लोकवत्सल, लोकेश, लोककर, लोकनाथ, लोकसाक्षी, लोकत्रयाशय, लय, मासमानिदामा, मांधाता, मानी, मारुत, मार्त्तंड, माता, मातर, महाबाहु, महाबुद्धि, महाबल, महायोगी, महायशाः, महावैद्य, महावीर्य, महावराह, महावृत्ति, महाकारुणिकोत्तम, महामाय, महामंत्र, महान्, महारथ, महास्वे(श्वे)ताप्रिय, महाशक्ति, महाशनि, महातेजा, महात्मा, मुहूर्त्त, महोत्साह, महेंद्र, महेच्छ, महेश, महेश्वर, मिहिर, महित, महत्तर, मधुसूदन, मोक्षदायक, मोक्ष, मोक्षधर, मोक्षहेतु, मोक्षद्वार, मौनी, मेधा, मेधावी, मेधिक, मेध्य, मेरुमेय, मुकुटी, मनुमुनि, मंदार, मंदेहक्षेपण, मनोहर, मनोहररूप, मंगल, मंगलालय, मंगलवान्, मंगली, मंगलकर्त्ता, मंत्र, मंत्रमूर्त्ति, मरीचिमाली, मृत्यु, मरुतामीश्वरेश्वर, मरुतांपति, मिष्टाचार, मति, मतिमान्, नाकार, नाकपालि, नागराट्, नारायण, नाथ, नभ, नभस्वान्, नभोविगाहन, नभकेतन, नूतन, नोत्तर, नयनैकरूप, नैकरूपात्मा, नीलकण्ठ, नीललोहित, नेता, नियतात्मा, निकेतन, निक्षुभापति, नंदिवर्धन, नंदन, नर, निराकुल, निरहंकार, निर्बन्ध, निर्गुण, निरंजन, निर्णय, नित्योदित, नित्य, नित्यगामी, निरंजन, नित्यरथ, राजा, राज्ञीप्रिय, राज्ञीपति, रवि, रविराज, रुचिप्रद, रुद्र, ऋद्धि, रोचिष्णु, रोगहा, रेणु, रेणुक(पा० रेणव), रेवंत, हृषीकेश, रक्षोघ्न, रक्तांग, रश्मिमाली, रि(ऋ)तु। ९००। रथाधीश, रथाध्यक्ष, रथारूढ, रथपति, रथी, रथिनांवर, शांतिप्रिय, शास्व(श्व)त, साष्टाक्षर, शुद्ध, शुभ, शुभाचार, शुभप्रद, शुभकर्म्मा, शब्दकर, शुची, शिव, शोभा, शोभन, शुभ्र, सुर, शीघ्रग, शीघ्रगति, शीर्ण, शेष, शुक्र, शुक्रांग, शुक्ररूप, शक्तिमान्, शक्तिमतां श्रेष्ठ, शंभु,

शनैश्चर, शनैश्चरपिता, शर्व्व, श्रीधर, श्रीपति, श्रेयस्कर, श्रीकण्ठ, श्रीमान्, श्रीमतांवर, श्रीनिवास, श्रीनिकेतन, श्रेष्ठ, शरण्य, शरण्यार्त्तिहर, श्रुतिमान्, शतविन्दु, शतमुख, तापी, तापन, तारापति, तार्क्षवाहन, तपन, तपनांवर, त्विषामीश, त्वरमाण, त्वष्टा, तीव्र, तेज, तेजसांनिधि, तेजसांपति, तेजस्वी, तेजोनिधि, तेजोराशि, तेजोनिलय, तीक्ष्ण, तीक्ष्णदीधिति, तीर्थ, तिग्मांशु, तमिश्र(स्र)हा, तमः, तमोहर, तमोनुद, तमोराति, तमोघ्न, तिमिरापह, त्रिविष्टप, त्रिविक्रम, त्रय, त्रेता, त्रिकसंस्थित, त्र्यक्षर, त्रिलोचन, तरणि, त्र्यंबक, त्रिलोकेश । १००० ।

यस्त्विदं शृणुयान्नित्यं पठेद् वा प्रयतो नरः । प्रतापी पूर्णमायुश्च करस्थास्तस्य संपदः ॥ १ ॥
नृपाग्नितस्करभयं व्याधिभ्यो न भयं भवेत् । विजयी च भवेन्नित्यं स श्रेयः समवाप्नुयात् ॥ २ ॥
कीर्तिमान् सुभगो विद्वान् स सुखी प्रियदर्शनः । भवेद् वर्षशतायुश्च सर्वबाधाविवर्जितः ॥ ३ ॥
नाम्नां सहस्रमिदमंशुमतः पठेद् यः, प्रातः शुचिर्नियमवान् सुसमाधियुक्तः ।
दूरेण तं परिहरन्ति सदैव रोगाः, भीताः सुपर्णमिव सर्वमहोरगेन्द्राः ॥ ४ ॥

इति श्री सूर्यसहस्रनामस्तोत्रं संपूर्णम् । अमुं श्री सूर्यसहस्रनामस्तोत्रं प्रत्यहं प्रणमत्पृथ्वीपतिकोटीरकोटिसंघट्टितपदकमल-त्रिखण्डाधिपति-दिल्लीपति-पातिसाहि श्री अकब्बर साहि जलालदीनः प्रत्यहं शृणोति सोऽपि प्रतापवान् भवतु ॥ श्री शुभं भवतु । श्री कल्याणं भवतु ॥ [ (१) स्व० विचक्षणविजयमुनेः संग्रहात् प्रकटीकृतं हिन्दीमासिक पत्रे 'आत्मानन्दे' वर्ष ४ अंक ९ । (२) 'गणि रत्नविजयेनालेखि । श्री सूरति वंदरे'–श्रीविजयधर्मसूरिमंडार, आग्रा नं० ३३७६. ]

## २ रत्नपालकथानकम् ।

अन्ते–उपाध्याय श्रीभानुचंद्रगणिभिरुदकदानोपरि कृतं रत्नपालकथानकं समाप्तम् । संवत् १६६२ वर्षे ज्येष्ठ सुदि १ गुरौ दिने मालपुरनगरतः मु० रत्ना लिखितं चिरं० दौलतीया पठनार्थम् ॥

[ Yati Śrī Vivekavijay's collection, Ghumrāvālā Upāśraya at Udaipur. ]

## ३ वसन्तराजशकुनशास्त्रवृत्तिः ।

आदौ — स्वस्ति श्रीसदनं यदीयवदनं वेधा विधायाद्भुतं, वीक्ष्याश्चर्यमवाप सस्पृहतया सन्मार्जयन्वाससा ।
क्षिप्तं तच्च तथाविधैरणुगुणैर्वैपम्यमापादितं, मन्ये संप्रति लक्ष्यते घनपथे शीतद्युतेर्मण्डलम् ॥ १ ॥
आनम्रत्रिदशेंद्रमौलिमुकुटप्रोद्दामरत्नांशुभिः, यत्पादद्वितयं विचित्ररचनां भंगीभिरंगीकृतम् ।
दिङ्नागैश्च यदीयकीर्त्तिरतुला कर्णावतंसीकृता, स श्रीवीरप्रभुर्दधातु भवतां शश्वन्मनोवांछितम् ॥ २ ॥

यस्त्रैलोक्यरमाभिरस्पृहतया सानंदमालोकितः, तीक्ष्णैः स्वर्गिवधूकटाक्षविशिखैर्यो लक्ष्यतां नागमत् ।
शान्तैः स्वात्मसमुत्थितैश्च निखिलान्भावान्समावेदयन्, स श्रीमान् भुवनावतंसकमणिः पायादपायात् प्रभुः ॥ ३ ॥
प्रादुर्भूता यदंगात् प्रसरति भुवने भारती भव्यरूपा, चक्रं यत् सृष्टिजाता नहि विभुरविभुः सद्विशेषानशेषान् ।
यद्वक्त्रं स्फीतिभावं दधद्हिमरुचां न्यत्कृतिं निर्मिमीते, ज्ञानाद्वैतप्रकाशः स भवतु भवतां भूतये नाभिजातः॥४॥
नमः सुकृतसंदोहशालिने परमात्मने । शंभवे सर्ववेदार्थवेदिने भवभेदिने ॥ ५ ॥

जाग्रज्ज्योतिरकब्बरक्षितिपतेरभ्यर्णमातस्थिवान्, सिद्धाद्रेः करमोचनादिसुकृतं योऽकारयत् शाहिना ।
जीवानामभयप्रदानमधिकं सर्वत्र देशे स्फुटम्, श्रीमद्वाचकपुंगवः स जयताच्छ्री भानुचन्द्राभिधः ॥ ६ ॥
*लक्ष्मीलीलाकटाक्षस्त्रिभुवनजनता कल्पनाकल्पशाखी, श्रीमद्धर्मप्ररोहाभिवनघनघटामङ्गलाख्यानविद्या ।
व्यक्तं मुक्त्यङ्गनाया वशकरणकला कार्म्मणं सर्वसम्पद्, सम्प्राप्ता वादिबीजं भज परमहंसो नाममाहात्म्यधाम ॥ ७
अस्ति श्रीमदुदारवाचकसमालङ्कारहारोपमः, प्रख्यातो भुवि हेमसूरिसदृशः श्री भानुचन्द्रो गुरुः ।
श्रीशत्रुञ्जयतीर्थशुल्कनिवहप्रत्याजनोद्यद्यशाः, शाहेः श्रीमदकब्बरार्पितमहोपाध्यायदृप्यत्पदः ॥ ८ ॥
तच्छिष्यः सुकृतैकभूर्मतिमतामग्रेसरः केसरी, शाहिस्वान्तविनोदनैकरसिकः श्रीसिद्धिचन्द्राभिधः ।
पूर्वं श्री विमलाद्रिचैत्यरचनां दूरीकृतां शाहिना, विज्ञप्यैव मुहुर्मुहुस्तमधिपं योऽकारयच्चां पुनः ॥ ९ ॥
यावन्या किल भाषया प्रगुणितान् ग्रन्थानशेषांश्च तान्,[1] [2]विज्ञाय प्रतिभागुणैस्तमधिकं योऽध्यापयन् शाहिराट् ।
[3]दृष्ट्वानेकविधानवैभवकलां चेतश्चमत्कारिणीम्, चक्रे खुष्फहमेति सर्वविदितं गोत्रं यदीयं हि सः ॥ १० ॥

---

* The verses 7 and 20 to 24 are not found in the printed editions of this work.

1 तथा । 2 चिन्तारत्नगुणांश्च यं गुरुविधं ध्यात्वा नृपोऽध्यापयत् । 3 दृष्ट्वा चाष्टशतावधानमाधनकला ।

[1]तद्बुद्धिवैभवकृतेऽत्र वसन्तराजसच्छाकुनस्य विवृतिं प्रणयत्यभिज्ञः ।
श्रीसूरचन्द्रचरणाम्बुजचञ्चरीकः श्री शाहिराजकृतसत्कृतिभानुचन्द्रः ॥ ११ ॥
जंबूद्वीपाभिधे द्वीपे क्षेत्रे भरतनामनि । राजते रजतस्वर्णचतुर्वर्णविभूषितम् ॥ १२ ॥
अर्बुदाद्रिसमीपस्थं सारणेश्वरशोभितम् । सीरोही नगरं तत्र तिलकं नगरीषु यत् ॥ १३ ॥ युग्मम् ।
नीलरत्नमहासौधरश्मिवल्लिवितानके ।.यत्र रात्रिषु कुर्वन्ति तारकाः सुमविभ्रमम् ॥ १४ ॥
मुखैश्चन्द्रमसं नेत्रैः कमलं कोकिलं स्वरैः । गमनैराजहंसं च जिग्युर्यत्राबला अपि ॥ १५ ॥
प्रतापाक्रान्तदिक्चक्रः साक्षाच्छक्र इवापरः । श्रीमानखयराजाख्यस्तत्रास्ते भूमिजम्भजित् ॥ १६ ॥
यस्यां विभाति धवलाः क्षीरोदस्फटिकालयाः । अक्षयाख्यमहाराजयशसां निचया इव ॥ १७ ॥
यस्य यद्द्विषतां चैव कीर्त्यकीर्त्यो सितासिते । मिलन्त्यो दिक्षु चक्रान्ते गङ्गायमुनयोर्भ्रमम् ॥ १८ ॥
रिपुर्दुर्यशसा स्पृष्टं यद्यशो विश्वपावनम् । जलाशयेषु स्नातीव शुद्ध्यै हंसावलिच्छलात् ॥ १९ ॥
*कन्दमूलफलाहारा वसानास्तारवीं त्वचम् । भूधूल्युद्धूलिता रेजुर्यद्द्विषस्तापसा इव ॥ २० ॥
स्पर्धिष्णुर्यत्प्रतापाग्निर्वाडवाग्निजिगीषया । विद्रुमद्रुमदम्भेन विशतीव पयोनिधौ ॥ २१ ॥
विरञ्चीं रचयन् भ्रान्तिमभ्रान्तं सोमसूर्ययोः । व्यधान्नीराजनां नित्यं यस्य कीर्त्तिप्रतापयोः ॥ २२ ॥
यद्भसुरिरपि स्वर्गे सङ्ख्यातीतेषु शत्रुषु । रणे यच्छन् कृपाणोऽस्य यात्राहीनो बभूव न ॥ २३ ॥
तस्यादेशं समासाद्य सौमनस्य पयोनिधेः । वृत्तिर्वसन्तराजस्य सिद्धिचन्द्रेण शोध्यते ॥ २४ ॥

* इह हि ग्रंथकृत् निर्विघ्नसमाप्तिकामो मंगलमाचरेदित्यालौकिकावगीतशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकत्वेन प्रथमत एव मंगलमाविःकुर्वन्नाह विरंचीति अस्यार्थः ......।

अन्ते — वसन्तराजशाकुने समस्तसत्यकौतुके । सदागमार्थशोभनैः कृतं प्रभावकीर्त्तनम् ॥ १ ॥
पूर्वव्याख्यातविशेषणविशिष्टे वसन्तराजशाकुने ग्रन्थस्य प्रभावकीर्त्तनं कृतमिति विंशतितमो वर्गः ॥ २० ॥

इति श्रीपातशाहश्रीअकब्बरजल्लालदीनसूर्यसहस्रनामाध्यापकश्रीशत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधापकमहोपाध्यायश्रीभानुचन्द्रगणिविरचितायां तच्छिष्याष्टोत्तरशतावधानसाधनप्रमुदितपातशाहश्रीअकब्बर जल्लालदीन प्रदत्त 'पु(खु)-श्फहमापराभिधानमहोपाध्यायश्रीसिद्धिचन्द्रगणिना विचार्य संशोधितायां वसन्तराजटीकायां विंशतितमो वर्गः ॥ समाप्तोऽयं ग्रन्थः । श्रीर्जयतु ॥

[ (१) The text of 18 folios no. 1623 प्र० कान्तिविजयपुस्तकभण्डारे, वडोदरा । The following is added by the writer in the end :—

द्वितीयपुस्तकाभावादर्थानाकलनादपि । यदशुद्धं भवेत् किञ्चित्तच्छोध्यं करुणापरैः ॥ १ ॥
वर्णगणने सञ्जातानुष्टुप्सार्द्धसप्तसहस्रकम् । वाच्यमानश्चिरं नंद्याद् ग्रन्थोऽयं धिषणाधनैः ॥ २ ॥

इति श्री वसन्तराजशकुनग्रन्थटीका संपूर्णा । संवत् १७६३ वर्षे भाद्रपदासित नवम्या९मह्नि चन्द्रसुतवारे श्री अञ्चलगच्छे वाचक श्री ५ श्री धनराजजीशिष्य वाचकश्री हीराणंदजीशिष्य वाचक जिनराजेन पत्ति (प्रतिः) लिखिता ॥ श्रीरस्तु ॥ पत्राणि ११७ पंक्तयः १६ नं० ११९९ हंसविजयपुस्तकभण्डारे वडोदरा ।

(२) ग्रन्थाग्र ३७५० in Jesalmer Bhandār. ग्रं. २२२६ पत्र १०१ जिनभद्रीय भंडार–जेसलमेर. ]

## ४ कादम्बरी-पूर्वार्ध-टीका ।

आदौ — श्रेयःश्रीललनाविलासकुशलः पायादपायात्स वः, श्रीमन्नाभिनरेन्द्रसूनुरमरैः संसेव्यमानान्तिकः ।
रेजे यस्य कचावली भुजशिरो देशे लुठन्ती प्रभो–र्लग्ना शैवलमञ्जरी भवसरित्पारं प्रयातुः किमु ॥ १ ॥
सर्वेऽन्ये जनतानिषेविततया मानाभिभूता भृशं, मन्यन्ते तृणवत् त्रिलोकमखिलं दुर्बुद्धिबद्धाशयाः ।
कृत्स्नैश्वर्यजुषापि येन सुधिया देवेन्द्रसेव्याङ्घ्रिणा, नैवाकारि कदापि गर्वमलिनं चेतः स शान्तिः श्रिये ॥ २ ॥
यत्कीर्त्तिर्धवलीचकार सहसा ब्रह्माण्डभाण्डोदरं, दाशार्होऽपि तदन्तरा निपतितः सद्यो न संलक्षितः ।
तेनाद्यापि निरीश्वरं जगदिदं जल्पन्ति सांख्यादयः, स श्रीनेमिजिनेश्वरो भवभृतां देयादमन्दां मुदम् ॥ ३ ॥

1 तश्चित्तकौतुककृते हि ।

मूर्ध्नि न्यस्तद्विजिह्वाधिपतिफणगणस्पष्टसंरम्भदम्भाद्, धत्ते यः सप्तविश्वाद्भुतपरममनोहारि साम्राज्यलक्ष्मीम् ।
नम्रालुस्वर्गिमौलिप्रकरमणिलसत्कान्तिभिश्चित्रिताङ्घ्रिः, स श्रीपार्श्वाधिराजो भवतु भवभिदे पार्श्वसंसेव्यमानः ॥ ४ ॥
यद्वाचामधिकां विलासपदवीमीहेद् भृशं भारती, यत्सत्त्वैकपरम्परां कलयितुं सिंहोऽङ्कदम्भादियात् ।
यत्सौन्दर्यदिदृक्षयेव समभूदक्ष्णां सहस्रं हरेः, स श्री वीरविभुर्ददातु भविनां शश्वन्मनोवाञ्छितम् ॥ ५ ॥

श्रीमत्तपःपक्षसहस्रदीधितिः श्रीहीरसूरिः समभून् महोदयः ।
यद्वक्त्रसौन्दर्यगुणं विलोकयन् ययौ सुरौघः किमु निर्निमेषताम् ॥ ६ ॥
अनन्यसौजन्यगुणैर्गरीयान् विशिष्टशिष्टाचरणैर्वरीयान् ।
तत्पट्टपाथोनिधिपूर्णचन्द्रो विराजते श्री विजयादिसेनः ॥ ७ ॥
तत्पट्टोदयचूलालक्ष्मिपूर्णेन्दुसंनिभः श्रीमान् ।
श्री विजयतिलकसूरिर्भूरिगुणैर्भूषितो जयति ॥ ८ ॥
तत्संप्रदाये प्रथितप्रभावो बभूव हानर्षिरतिप्रसिद्धः ।
यदीयवैराग्यकथां प्रवक्तुं प्राप्तो गुरुः किं हरिसंनिधानम् ॥ ९ ॥
तद्दीक्षितानेकविनेयवर्गमुक्तालतामध्यमणिप्रकारः ।
श्रीवाचकेन्द्रः सकलादिचन्द्रो बभूव विश्वाद्भुतवाग्विलासः ॥ १० ॥
श्रीसूरचन्द्रः समभूत्तदीयशिष्याग्रणीर्न्यायविदां वरेण्यः ।
यत्तर्कयुक्त्या त्रिदिवं निषेवे तिरस्कृतश्चित्रशिखण्डिजोऽपि ॥ ११ ॥
तदीयपादाम्बुजचञ्चरीको विराजतेऽघा हरिधीसखामः ।
श्रीवाचकः संप्रति भानुचन्द्रो ह्यकब्बरक्ष्मापतिदत्तमानः ॥ १२ ॥
श्रीशाहिचेतोऽब्जषडङ्घ्रितुल्यः श्रीसिद्धिचन्द्रोऽस्ति मदीयशिष्यः ।
कादम्बरीवृत्तिरियं तदीयमनोमुदे तेन मया प्रतन्यते ॥ १३ ॥

अन्ते—इति श्रीमत्तपोगणगगनाङ्गणगगनमणिभट्टारकसार्वभौमभट्टारकविजयसेनसूरीश्वराणां विजयराज्ये पातशाह श्री अकब्बरप्रदापितोपाध्यायपदधारक श्रीशत्रुंजयकरमोचनाद्यनेकसुकृतकारक महोपाध्याय श्रीभानुचन्द्रगणिविरचितायां कादम्बरी निरन्तरव्याख्यायां प्रथम परिच्छेदः ।

## ५ सारस्वतव्याकरणवृत्तिः (भाष्यं, टिप्पणं, विवरणं वा)

आदौ–वाग्देवीमभिवन्द्य वन्द्यचरणां वृन्दारकाणां गणैः, सर्वेषां सुधियामनुग्रहधिया गम्भीरभावाद्भुताम् ।
क्षैमेन्द्रीं विवृणोति वाचकपतिः श्रीभानुचन्द्राभिधः, शाहि श्रीमदकब्बरक्षितिपतेः प्राप्तप्रतिष्ठोदयः ॥ १ ॥
अन्ते–श्री हानर्षिकुले नवीनकविताकान्ताभिधानव्रती, भूजानेरपि संमतः समभवत् श्री सूरचन्द्राह्वयः ।
तच्छिष्यः करमोचनादिसुकृतैः सम्प्रीणयत् सज्जनान्, क्षेमेन्द्रस्य कृतेश्चकार विवृतिं श्री भानुचन्द्राभिधः ॥ २ ॥

इति श्री पातसाह अकब्बर सूर्यसहस्रनामाध्यापक श्री शत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधापक महो० श्री भानुचन्द्र गणि विरचितायां तच्छिष्याष्टोत्तरशतावधानसाधनप्रमुदितपातसाहि श्री अकब्बर प्रदत्त 'खु(खु)स्फहमा'पराभिधान महो० श्री सिद्धिचन्द्र गणि शोधितायां क्षेमेन्द्रटीकायां कृदन्तप्रक्रिया समाप्तिमगमत् ।

[ (१) 40 folios No. 40 Pra. Kāntivijaya's Bhandār at Chāṇi. (२) ग्रन्थाग्र २१५० folios 40, MS. no. 2 in the dābdā no. 21 in Sangha's Bhandār at Pātaṇ. ]

## ६ काव्यप्रकाशवृत्तिः ।

As the work was not available, I could not cite the initial & final portions thereof.

## ७ नामश्रेणिवृत्तिः (नामसङ्ग्रहः, नाममाला, विविक्तनामसङ्ग्रहो वा)

आदौ—॥ ९० ॥ श्री शत्रुंजयकरमोचनाद्यनेकसुकृतकारक सकलवाचकचक्रचूडामणिमहोपाध्याय
श्री ५ श्रीभानुचन्द्रगणिगुरुभ्यो नमः ॥

स्वस्ति श्रीस्त्रिजगज्जन्तु-जातुजीवातुसन्निभः । शिवतातिः सतां भूयाच्छान्तिनाथो जिनेश्वरः ॥ १ ॥

नवीनकविताकान्ताभिमानव्रतशालिनः । स्वगुरोः सूरचन्द्रस्य प्रणम्य चरणाम्बुजम् ॥ २ ॥
भावचन्द्रादिशिष्याणां सम्यग्व्युत्पत्तिहेतवे । नामसङ्ग्रह-नामानि विलिख्यन्ते पृथक् पृथक् ॥ ३ ॥
रूढयौगिकमिश्राख्याः त्रिधा शब्दाः प्रकीर्त्तिताः । व्युत्पत्तिवार्जितास्तत्र रूढा आखंडलादयः ॥ ४ ॥
व्युत्पत्तिभाजः सर्वेऽपि मन्यते शाकटायनः । तन्मतेऽपि तदन्वर्थवर्जितः प्रथमो मतः ॥ ५ ॥
यौगिका योगजनिता योगस्तत्रान्वयो मतः । गुणक्रियाभ्यां संभूतः संबंधप्रभवश्च सः ॥ ६ ॥
गुणतो नीलकंठाद्याः क्रियातः स्रष्टसंनिभाः । स्वस्वामित्वादि संबंधस्तत्राहुर्नाम तद्वताम् ॥ ७ ॥

अनयोरर्थः । शब्दानां परमार्थानुगमनमन्वयः स योगो गुणक्रियासम्बधाच्च भवति मंगलं भद्रं मद्रं शस्त ।...इति शत्रुंजयकरमोचनादिसुकृतकारि महोपाध्याय श्री ५ भानुचंद्रगणि विरचिते विविक्तनामसंग्रहे देवाधिदेवकांडः प्रथमः ॥

स्वर्गे इति स्वर्गः......आदित्येत्यादि सूर्य नामानि । आदित्यः सविता । ......पूज्यनामतः प्रयोज्याः । यथा गुरुपादाः । अर्हत्भट्टारकः । कुमारपालदेवः । शेषश्चात्रः । भट्टारकः भट्टः । आवुकादयो नांद्यप्रस्ताव(व)त् नांद्योक्तौ दृष्टव्याः ॥ इति श्री... भानुचन्द्रविरचिते विविक्तनामसंग्रहे द्वितीयः कांडः ॥ छः ॥

अथ तृतीय मर्त्यकांडमारभ्यते ॥ मनुष्यनाम मर्त्यः......एते सर्वेपि म्लेच्छजातयः स्युः ॥ इति श्री...तृतीयकाण्डः ॥

अथ तिर्यक्कांडचतुर्थमाख्यायते तत्र पृथिव्यप्तेजोवायुवनस्पतिमेदेनेकेंद्रियाः...... ॥ शत्रुंजयकरमोचनादि सुकृतकारि महोपाध्याय श्री भानुचन्द्र गणि विरचिते विविक्तनामसंग्रहे चतुर्थः कांडः ॥

पंचमं नारकं कांडमारभ्यते, नारकं नाम नरके भवा नारकाः.........भूमिविवरनाम ॥ गर्त्तः पुंस्त्रीलिंगः । श्वभ्रः अवट अगाधः दरः त्रिलिंगभूमिविवरमिति श्री नामसंग्रहे पंचमः कांडः ॥

षष्ठं सामान्यकांडमार(भ्य)ते ॥ लोक नाम......यदाहुः—इयंत इति संख्यानं निपातानां न विद्यते । प्रयोजनवशादेते निपात्यंते पदेपदे ॥

अन्ते–इति श्री शत्रुंजयकरमोचनादि सुकृतकारक महोपाध्याय श्री ५ भानुचन्द्र गणि विरचित नाममालायां षष्ठः कांडः संपूर्णः ॥ ६ ॥ छः ॥

[ (१) संवत १६९८ वर्षे मार्गशिर मासे शुक्ल पक्षे पंचम्यां तिथौ गुरुवासरे लिपता श्यामपुरी मध्ये । यादृशं पुस्तके दृष्ट्वा तादृशं लिखतं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयतां ॥ १ ॥ श्री(शु)भं भवतु ॥ कल्याणमस्तु ॥ श्री ॥ This is an incorrect copy of 113 folios Dehla's Upāśraya's Bhandār at Ahmedābād. (२) इति श्रीमत्तपोगणगणनाङ्गनगगनमणिभट्टारकसार्व्वभौमभट्टारकश्री ५ श्रीविजयसेनसूरीश्वराणां विजयराज्ये पतिसाहश्री ५ श्रीअकब्बर-जलालदीनप्रदत्तोपाध्यायधारकश्री शक्र(त्रु)ञ्जयकरमोचनाद्यनेकसुकृतकारक महोपाध्यायश्री ५ श्री भानुचन्द्रगणिविरचिते विविक्तनामसंग्रहे षष्ठः काण्डः समाप्तः । संवत् १७८५ । Mitra's Notices X, no. 4015 pp. 151–152. ]

## ८ विवेकविलासटीका ।

आदौ—आनम्रकम्रामरपूर्वदेवं श्री मारुदेवं प्रणमामि देवम् ।
व्यनक्ति निःशेषपदार्थसार्थान् यदीयगीरद्भुतदीपिकेव ॥ १ ॥
शान्तेर्निशान्तं शिवतातिरस्तु श्री शान्तिनाथो जगदेकनाथः ।
कुरङ्गलक्ष्मापि जिनाधिराजो जज्ञे कदाचिन्न कुरङ्गभृद् यः ॥ २ ॥
अरिष्टनेमिर्भगवानरिष्ट-संघातनिर्घातकृदस्तु वः सः ।
सुपर्वशाखीव समीहितार्थं करोति यत्पादयुगप्रणामः ॥ ३ ॥
विघ्नौघविध्वंसनसावधानं तं पार्श्वनामानमधीशमीडे ।
पद्माकरोल्लासकरो नराणां यन्नाममन्त्रोऽजनि मित्रतुल्यः ॥ ४ ॥
वीरं जिनं चेतसि दध्महे तं सुपर्व्वपृथ्वीधरशृङ्गधीरम् ।
गवां विलासैर्भुवनप्रवोधं चकार यो भानुरिवोरुतेजाः ॥ ५ ॥
श्रीमत्तपागणगणाधिपलब्धवोधिर् हानर्षिरित्यजनि पण्डितवृन्दवर्यः ।
तस्यान्तिषत्सकलवाचकमौलिमौलिः श्रीवाचकः सकलचन्द्र इति प्रसिद्धः ॥ ६ ॥
शिष्यस्तदीयोऽजनि सूरचन्द्राभिधः सुधिः कोविदवृन्दचन्द्रः ।

नवीनभास्वत्कवितैककान्ता-मानव्रतीत्यद्भुतकीर्तिकान्तः ॥ ७ ॥
सिद्धाद्रेः करमोचनादिसुकृतश्रेणिपवीत्रीकृत-स्वान्तः शाहिसुदत्त 'वाचक' पदः श्री भानुचन्द्राभिधः ।
तच्छिष्यः कुरुते विवेककलितो ग्रन्थो विलासाभिधो यस्तस्याभिमतार्थसार्थरुचिरां वृत्तिं सतां संमताम् ॥ ८ ॥

इह शिष्टाः शास्त्रादौ क्वचिदिष्टे वस्तुनि प्रवर्तमाना अभिमतदेवतानमस्कारपूर्वकमेवोपक्रमन्ते इति शिष्टाचारपरिपालनार्थं प्रारिप्सितपरिसमाप्तिप्रतिबन्धकदुरितनिवर्त्तनाय च प्रस्तुतग्रन्थसूत्रकारो वायटगच्छीयजिनदत्तसूरिरादौ तमाह 'शाश्वतानन्द' इति ।

... ... ...

अन्ते–इति श्री शत्रुंजयकरमोचनादिसुकृतकारिमहोपाध्यायश्रीभानुचन्द्रगणिविरचितायां विवेकविलासटीकायां द्वादश उल्लासः । समाप्तोऽयं विवेकविलासाख्यो ग्रन्थः ॥ विवेकविलासटीकायां ग्रन्थकारकृतस्वगच्छादिप्रकटनरूपप्रशस्त्याख्या संपूर्णा ॥

क्ष्मापालमौलिमणिशाहि अकब्बराख्यसम्प्राप्तसर्वजनताविदितप्रतिष्ठः ।
श्रीजैनशासनसमुन्नतिलब्धविश्वविश्वम्भरावलयविश्रुतकीर्त्तिपूरः ॥ १ ॥
श्रीभानुचन्द्रवरवाचकचक्रवर्ती स्पष्टार्थदामतिविवेकविलासवृत्तिम् ।
एतामविश्रुततरामुपकर्त्तुमन्यान् निःशेषपर्षदुचितां रचयांचकार ॥ २ ॥ युग्मम् ॥
श्रीमत्सुधर्ममुखसूरिपरम्परायां श्रीसूरिहीरविजयस्तपगच्छनेता ।
आसीदकब्बरधराधिपतिप्रदत्तां ख्यातिं जगद्गुरुरिति प्रथितां दधानः ॥ ३ ॥
तत्पट्टपूर्वगिरिशृङ्गसहस्रभानुः सूरीश्वरो विजयसेनमुनीन्द्रचन्द्रः ।
श्रीपातसाहिपरिषज्जयवादलब्धः ख्यातोऽभवत् कुमतमत्तमतङ्गसिंहः ॥ ४ ॥
तत्पट्टेऽभूत् सततनिरतिचारचारित्रचारुश्चातुर्विद्योदधि......कधी भाग्यसौभाग्यभूमिः ।
पारंपर्यागतवचनसंवादिधर्मोपदेशः सूरिः श्रीमद् विजयतिलकः शुद्धवैराग्यरंगः ॥ ५ ॥
तत्पट्टे प्रकटोदये पट्टतरप्राप्तप्रतिष्ठान्वये सद्वाचंयमराजिराजि विजयानन्दाभिधाने प्रभौ ।
श्रीमत्सूरिशिरोमणौ विजयिनि श्री सिद्धिचन्द्राभिधान् निर्देशं समवाप्य वाचकसभाशृंगारहारोपमात् ॥ ६ ॥
वाचकशिरोवतंसश्रीमत् कल्याणविजयगुरुशिष्यैः । स्वपरागमार्थतत्त्वोदधिभिः श्री लाभविजयबुधैः ॥ ७ ॥
श्रीदेवविजय-विद्वद्विनेय-जयविजयबुधयुतैश्चैषा । समशोधि सिद्धि-मुनि-रस-शशिमितवर्षे चिरंजीयात् ॥ ८ ॥

इति प्रशस्तिः ॥ शुभं भवतु ॥ ग्रंथाग्रसंख्या ६६२१ अक्षर १२ ॥ कल्याणमस्तु ॥ भद्रमस्तु ॥ [ Folios 201 lines 14 each—Good correct and old MS. no. 304 Śri Bhaktivijaya's collection with Śri Jaina Ātmānanda Sabhā, Bhāvanagar. (2) The final 5th verse referring to विजयतिलकसूरि in the ending portion is omitted and in the next verse in the place of विजयानंदाभिधाने, words विजयादेवोभिधाने are wrongly substituted—इति प्रशस्तिः समाप्त ॥ folios 145 no. 55 Pra. Kantivijaya's Bhandār at Baroda. (3) The last 4 verses in the ending portion are omitted—इति विवेकविलासप्रशस्तिः संपूर्णा । ग्रं ७७५०. A fresh copy of 300 folios of 10 lines each, written in S. Y. 1967 no. 1465. Hansavijaya's Bhandār at Baroda. (4) With the omission of the last four verses इति श्रीविवेकविलास समाप्तम् ॥—New incorrect ms. no. 304 Śri Bhaktivijaya's collection with Śri Jaina Ātmānada Sabhā, Bhāvanagar. ]

## ९ षट्त्रिंशिकावृत्ति ( ईर्यापथिकी )–

[*No copy was accessible to me hence its beginning and ending portions could not be cited.*]

---

# सिद्धिचन्द्रकृत-ग्रन्थ-प्रशस्त्यादि ।

## १ कादम्बरी-उत्तरार्ध-टीका ।

आदौ — मेरुः स्नात्रभवैः सकुङ्कुमपयःपूरैः परीतोऽभवत्,
पीतस्तेन सुवर्णपर्वत इति ख्यातिं जगाम क्षितौ ।
देवीनृत्यविशीर्णहारमणिभिस्तारो गतस्तारका-
धारोऽसाविति यज्जनिव्यतिकरः सोऽव्याद् वृषाङ्कः प्रभुः ॥ १ ॥

श्रीमाञ्शान्तिः प्रभुरवतु वो गाढसर्वाङ्गबाधा, यं राजश्रीः कुभगमभजत् किं नु यस्य प्रभोर्न ।
तद्रागेऽन्तःकरणमविशद्युष्टचेष्टाविशिष्टं, वार्धिस्यन्दस्तटमिव विषं भोगिचूडामणीवत् ॥ २ ॥
जाग्रज्ज्योतिरकब्बरक्षितिपतेरभ्यर्णमातस्थिवान्, सिद्धाद्रेः करमोचनादिसुकृतं योऽकारयच्छाहिना ।
जीवानामभयप्रदानमपि यः सर्वत्र देशे स्फुटं, श्रीमत्पाठकपुङ्गवः स जयताच्छ्री भानुचन्द्राभिधः ॥ ३ ॥
तच्छिष्यः सुकृतैकभूर्मतिमतामग्रेसरः केसरी, शाहिस्वान्तविनोदनैकरसिकः श्रीसिद्धिचन्द्राभिधः ।
पूर्वं श्रीविमलाद्रिचैत्यरचनां दूरीकृतां शाहिना, विज्ञाप्यैव मुहुर्मुहुस्तमधिपं योऽकारयत् तां पुनः ॥ ४ ॥
यावन्त्या किल भाषया प्रगुणितान् ग्रन्थानशेषांश्च तान्, विज्ञाय प्रतिभागुणैस्तमधिकं योऽध्यापयच्छाहिराट् ।
दृष्ट्वाऽनेकविधानवैभवकलां चेतश्चमत्कारिणीं, चक्रे खुस्फहमेति सर्वविदितं गोत्रं यदीयं पुनः ॥ ५ ॥
प्रोच्चैः पञ्चसहस्रतुङ्गतुरगाञ्छ्रीसिन्धुरान् दुर्धरान्, दत्त्वा प्राग्भवसम्भवप्रणयतो धृत्वा करे यं जगौ ।
शाहिश्रीमदकब्बरक्षितिपतिस्त्यक्त्वा व्रतं दुष्करं, श्रीमत्संयमयामिनीश वसुधाधीशोऽधुना त्वं भव ॥ ६ ॥

साक्षात्कन्दर्परूपः क्षितितलविदितो वाचकव्रातशक्रः,
स्मृत्वा वाक्यं गुरूणां गुरुवचनरतो भक्तिपर्यानगर्वात् ।
धीमान् षट्शास्त्रवेत्ता रचयति रुचिरां सज्जनैः श्लाघनीयां,
टीकां कादम्बरीयां निजगुरुघटितां किंचिदूनस्थितां सः ॥ ७ ॥

... ... ... ...

अन्ते — इति श्री पादशाह श्री अकब्बर जलालदीन सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचनाद्यनेक सुकृतविधापक महोपाध्याय श्री भानुचन्द्रगणिस्तच्छिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादशाह श्री अकब्बर प्रदत्त खुष्फहमापराभिधान महोपाध्याय श्री सिद्धिचन्द्रगणि विरचितायां कादम्बरीटीकायामुत्तरखण्डटीका समाप्ता ॥

## २ शोभनस्तुतिटीका ।

आदौ — शश्वत्क्षीरपयोधिजा मधुकरीसंसेव्यमानक्रमा-
म्भोजन्मद्वितयः शिवं स दिशतु श्रीपार्श्वचिन्तामणिः ।
कस्तूरिकृतपत्रवल्लिहृदया यत्कीर्त्तिकान्ता किमु
द्रष्टुं विश्वमितस्ततः शशितनुः कौतूहलाद् भ्राम्यति ॥ १ ॥

अस्ति[१] श्रीमदखण्डपाठकगणप्राप्तप्रतिष्ठोन्नतिर्भूपालावलिवन्द्यमानचरणः श्रीभानुचन्द्रो गुरुः ।
यत्कीर्त्तिर्भुवनाङ्गणे गुणगणच्छन्ने न मान्ती पुनर्धातुः कर्णगताऽकरोदभिनवब्रह्माण्डयाच्ञामिव ॥ २ ॥

यदुपदेशवशेन मुदं दध(वह)न्, निखिलमण्डलवासिजने निजे ।
मृतधनं च करं च स जीजिआऽभिधमकब्बरभूपतिरत्यजत् ॥ ३ ॥

तस्यान्तेनिलयी विधेयजगतीलोकसरो मूर्तिमान्, विद्वद्वृन्दगजेन्द्रतर्जनहरिः श्री सिद्धिचन्द्रोऽस्ति सः ।
यत्कीर्त्तिभुजगाङ्गनावलिभिरुद्गीतां समाकर्णयन्, आनन्दामृतपूर्णकर्णकुहरः शेषः सुखं खेलति ॥ ४ ॥

१ पाठान्तरेण—जीयात् श्रीमदखंडवाचकगणप्राप्तप्रतिष्ठोन्नतिः. २ स्थूलगता as quoted in the author's gloss on *Bhaktāmara–stotra.*

परेषां यद्दूरे हृदयसरणेरस्ति तदिदं, विधानानामष्टोत्तरशतकमालोक्य मुदितः ।
महाराजः श्रीमानकबरनृपो यस्य सहसा, भुवि ख्यातामाख्यां सपदि विदधे खुष्फहमिति ॥ ५ ॥
बालबोधकृते तेन परोपकारशालिना । संक्षिप्ता क्रियते वृत्तिः शोभना शोभनस्तुतेः ॥ ६ ॥

अन्ते — इति श्री महाराजाधिराज पादशाह श्री अकब्बर सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधापक महोपाध्याय श्री भानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदित पातिसाह श्री अकब्बर जल्लालदीन प्रदत्त 'खुस्फहमा'पराभिधान महोपाध्याय श्री सिद्धिचन्द्रगणिविरचितायां शोभनाचार्यनाम्ना विहितायाः शोभनस्तुतेः टीकायाः श्री महावीरतीर्थंकरस्येयं स्तुतिवृत्तिः । तत्समाप्तौ च समाप्ता श्री शोभनस्तुतिवृत्तिः ॥

## ३ वृद्धप्रस्तावोक्तिरत्नाकर ।

[No MS. of this work has been available to me. Its 29 verses are quoted by the author in its *Bhaktāmara-stotra-Vṛtti* in the words 'असत्कृत — अस्मन्निर्मित — वृद्धप्रस्तावोक्तिरत्नाकरात्, some of them for instance are extracted here:—]

उत्कूजन्तु वटे वटे वत वकाः काका वराका अपि, क्वां कुर्वन्तु सदा निनादपटवस्ते पिप्पले पिप्पले ।
सोऽन्यः कोऽपि रसालपल्लवलवग्रासोल्लसत्पाटवः, क्रीडत्कोकिलकण्ठकूजनकलालीलाविलासक्रमः ॥

भक्तामरस्तोत्रस्य ६ श्लोकवृत्तौ (सुभाषितरत्नभाण्डागारेऽपि, पृ. २३६).

मत्तेभकुम्भदलने भुवि सन्ति शूराः केचित् प्रचण्डमृगराजवधेऽपि शक्ताः ।
किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य, कन्दर्पदर्पदलने विरला मनुष्याः ॥

तत्रैव, १७ श्लोकवृत्तौ ।

कोशान् गेहेष्वमुञ्चन् पथि करितुरगान् बान्धवानर्द्धमार्गे-
दुर्गेष्वन्तःपुराणि प्रतिरवचकिताः पर्वतेभ्यो निवृत्ताः ।
यस्योद्योगे भ्रमन्तः समसमयसमारम्भगम्भीरभेरी-
भाङ्कारापूर्णकर्णज्वरभरतरलप्रेक्षिताशाः क्षितीशाः ॥

तत्रैव, ३८ श्लोकवृत्तौ ।

दधन्मुक्तापंक्तिं हृदि रुचिरकर्पूरविशदां, मुखेन्दुप्रोत्फुल्लामिव कुमुदराजीं किमथवा ।
सुधाधारामन्तःप्रणयजलधेरुद्गतवती, युवा वृन्दारण्ये शिथिलयति धैर्यं मृगदृशाम् ॥

तत्रैव, ४१ श्लोकवृत्तौ ।

वारां राशिरसौ प्रभूय भवतीं रत्नाकरत्वं गतो
लक्ष्मी ! त्वत्पतिभावमेत्य मुरजिज्जातस्त्रिलोकीपतिः ।
कन्दर्पो जनचित्तरञ्जन इति त्वन्नन्दनत्वादभूत्
सर्वत्र त्वदनुग्रहप्रणयिनी मन्ये महत्त्वस्थितिः ॥

तत्रैव, अन्तिम ४४ श्लोकवृत्तौ ।

## ४ भानुचन्द्रचरित । [The present work.]

## ५ भक्तामरस्तोत्रवृत्ति ।

आदौ — श्रेयःश्रिये प्रभुर्भूयात् स वो नाभिनन्दनः । स्वर्गवी च मदीया गौः सुरसार्थमपूपयत् ॥ १ ॥
कर्ता शतावधानानां विजेतोन्मत्तवादिनाम् । वेत्ता षडपि शास्त्राणामध्येता फारसीमपि ॥ २ ॥
अकब्बर सुरत्राणहृदयाम्बुजषट्पदः । दधानः 'खुशफहं'मिति बिरुदं शाहिनार्पितम् ॥ ३ ॥
तेन वाचकचन्द्रेण सिद्धिचन्द्रेण तन्यते । भक्तामरस्य बालानां वृत्तिर्व्युत्पत्तिहेतवे ॥ ४ ॥

अन्ते — इति पादशाह श्री अकब्बर जल्लालुदीन सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचन–गोवधनिवर्त्तनाद्यनेकसुकृतविनिर्मापक महोपाध्याय श्री भानुचन्द्रगणिशिष्य युगपदष्टोत्तरशतावधानसाधनप्रमुदितपातशाह श्री अकब्बर

जल्लालुदीन पातशाह श्री नूरदीन जिहांगीर प्रदत्त 'खुष्फहम' 'नादिरजमां' द्वितीयाभिधान महोपाध्याय श्री सिद्धिचन्द्रगणि विरचिता भक्तामरस्तोत्रवृत्तिः समाप्ता ।

[ Published by Shā Bhimśi Māṇek, Bombay. ]

## ६ तर्कभाषाटीका ।

[ The work was not available. Hence its first and last portions could not be cited. Its copy is in the Vimala Gaccha's Bhandār at Ahmedābād. ]

## ७ सप्तपदार्थीटीका । [as stated above in no. 6]

## ८ जिनशतकटीका ।

आदौ — प्रणम्य नम्रामरपूर्वदेवं श्रीनाभिराजाङ्गजमादिदेवम् ।
श्री सिद्धिचन्द्राभिधवाचकेन्द्रः सुखाववोधां विदधाति वृत्तिम् ॥ १ ॥

दुर्वोधं जिनशतकं व्याख्यातुं केन शक्यते । मुह्यतीव मतिर्यत्र विशदाऽपि विपश्चिताम् ॥ २ ॥
अभ्युद्यतोऽस्मि तस्यापि वृत्तिं कर्त्तुं गतत्रपः । तद् वालचापलं मत्वा क्षन्तव्यं धिषणाधनैः ॥ ३ ॥
क्व वृत्तिः जिनशतिका क्व मेऽल्पविषया च धीः । दुस्तरं स्वभुजाभ्यां तत् तितीर्षुरस्मि सागरम् ॥ ४ ॥
विशेषार्थो विशेषार्थैर्ज्ञातव्यः पञ्जिकादितः । मया योजनिका मात्रं वालानामिह दृश्यते ॥ ५ ॥

अन्ते — इति पातशाह श्री अकव्वर जल्लालुदीन श्री सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचननिश्शेषदेश-गोवधनिवर्त्तनाद्यनेकसुकृतविनिर्मापक महोपाध्याय श्री भानुचन्द्रगणिशिष्य युगपदष्टोत्तरशतावधानसाधनप्रमुदितपातशाह श्री अकव्वर जल्लालदीन पातशाह श्री जिहांगीर नूरदीनाभ्यां प्रदत्त 'षु(खु)स्फहम' 'जिहांगीर पसंद' अभिधान महोपाध्याय श्री सिद्धिचन्द्र गणिविरचितायां जिनशतकटीकायां चन्द्रचन्द्रिकाभिधानायां पदवर्णनः प्रथमपरिच्छेदः समाप्तः ॥

संवति शशि-मुनि-विद्या-प्रमिते वर्षे च फाल्गुने मासि ।
सुगमा वृत्तिर्विहिता वाचकवरसिद्धिचन्द्रमुनीन्द्रेण ॥ १ ॥

इति पातसाह श्री अकवर प्रदत्त षु(खु)श्फहमाभिधानेन पातिशाह श्री नूरदीन जिहांगीर प्रदत्त जिहांगीर पसंदाभिधानेन च महोपाध्याय श्री सिद्धिचन्द्रगणिना विरचितायां चन्द्रचन्द्रिकाभिधानायां श्री जिनशतकटीकायां हस्तवर्णनो नाम द्वितीयः परिच्छेदः समाप्तः ॥

इति [as above] पातसाह श्री अकवर जल्लालदीन प्रदत्त 'षु(खु)श्फहम' अपराभिधानेन नूरदीन पातशाह श्री जिहांगीर प्रदत्त 'नादिरज्जमां' नाम्ना च महोपाध्याय श्री सिद्धिचन्द्रगणिना विरचितायां चन्द्रचन्द्रिकाभिधानायां जिनशतकटीकायां मुखवर्णनो नाम तृतीयः परिच्छेदः ॥

श्री विद्यापुरसंनिधिवर्त्तिश्रीसंघपुरस्थितेनैषा वृत्तिः (?) ।
विहिता वाचकचन्द्रेण सिद्धिचन्द्रमुनीन्द्रेण ॥ १ ॥

अन्ते — श्रीअकबरधरणीधरहृदयाम्बुजरमणरसिकमधुपेन ।
श्रीसिद्धिचन्द्रवाचकशिरोवतंसेन निर्मिता वृत्तिः ॥ १ ॥
कृपया विलोक्यमाना विभाव्यमाना च कोविदैः कुशलैः ।
नन्दतु शरत्सहस्रं वृत्तिरियं चन्द्रचन्द्रिका नाम्नी ॥ २ ॥
लिखितं मन्दमतित्वात् किंचिदशुद्धं यदत्र तच्छोध्यम् ।
मदुपरि विधाय महतीं करुणां करुणापरैः सुजनैः ॥ ३ ॥

इति [as above] पातसाह श्री अकवर जल्लालदीन प्रदत्त 'षु(खु)श्फहमा'पराभिधानेन पातसाह श्री नूरदीन

1 In the margin of the MS. it is stated... 'विलासपंडहितुल्येन' प्रत्यन्तरे पाठान्तरं ।

जिहांगीर प्रदत्त 'नादिरजम्मां' नाम्ना च महोपाध्याय श्री सिद्धिचन्द्रगणिविरचितायां जिनशतकटीकायां चन्द्रचन्द्रिकाभिधानायां वाग्वर्णनो नाम चतुर्थः परिच्छेदः समाप्तः ॥ संवत् १७१४ वर्षे वैशाख शुदि ३ दिने श्री संघपुर ग्रामे । [Folios 34 of 22 lines each in the box no. I, in the Vimala Gaccha's Bhandāra, Doshivādā, Vijāpur in Gujarāt.]

## ९ वासवदत्ताटीका ।

आदौ — जयश्रियं यच्छतु मारुदेवः पूर्वोहितामानत पूर्व्वहेतवः (?) ।
यो नाभिजन्मापि वृषध्वजोभूत तदद्भुतं कस्य जनस्य न स्यात् ॥ १ ॥
सारङ्गलक्ष्माऽभिनवः स शान्तिः शान्त्यै सतां निर्मितविघ्नशान्तिः ।
निरन्तरं मङ्गलधामगोऽपि न नीचतामञ्चति योऽत्र चित्रम् ॥ २ ॥
जगत्त्रयात्यद्भुतकेलिधाम तं नेमिनामप्रभुमानमामः ।
आजन्मभावादभवोऽपि योऽर्हन् कन्दर्पदर्पं निधनं निनाय ॥ ३ ॥
पद्मावतीपार्श्वनिषेव्यपार्श्वः श्रीपार्श्वदेवः स सदा मुदेव ।
यन्मूर्ध्नि दीपा इव सप्त सप्तद्वीपप्रकाशाय फणा विभान्ति ॥ ४ ॥
सुखश्रियं श्रीत्रिशलातनूजः पद्मातनूजप्रतिमस्तनोतु ।
शची यदंह्रोर्नखभां निभाल्य निजं करं कुङ्कुमकाम्ययाऽधात् ॥ ५ ॥
भीमत्व-कान्तत्वगुणैर्यदीयैर्न्यूनीकृतौ द्वावपि भानु-चन्द्रौ ।
अतो यथार्थोऽजनि भानुचन्द्रः श्रीवाचकश्चन्द्रकुलाब्धिचन्द्रः ॥ ६ ॥
अकब्बराह्वानमहीमहेन्द्रं योऽपीपठत् पाठकसार्वभौमः ।
सहस्रनामानि सहस्ररश्मेः सौवर्णसिंहासनसंस्थितः सन् ॥ ७ ॥
शत्रुंजयक्षोणिधरप्रचण्डदण्डादिमुक्तिस्फुटधर्मकर्म्म ।
यशो यदीयं कुमुदेन्दुजैत्रमद्यापि जागर्त्ति जगत्त्रयेऽपि ॥ ८ ॥
तत्पट्टपाथोनिधिवृद्धिचन्द्रः श्री सिद्धिचन्द्राभिधवाचकेन्द्रः ।
बाल्येऽपि यं वीक्ष्य मनोज्ञरूपमकब्बरः पुत्रपदं प्रपेदे ॥ ९ ॥
पुनर्जिहांगीरनरेन्द्रचन्द्रः प्रदीयमानामपि कामिनीं यः ।
हठेन नोरीकृतवान् युवापि प्रत्यक्षमेतत् खलु चित्रमत्र ॥ १० ॥
तेनेयमत्यद्भुतबुद्धिशालिनां मेधाविनां चित्तचमत्कृतेः कृते ।
परोपकारेण परेण वृत्तिर्विधीयते वासवदत्तिकाख्या ॥ ११ ॥

अन्ते — इति श्री महाकविसुबन्धुविरचिता वासवदत्ता आख्यायिका समाप्ता ॥ इति पादशाह श्री अकबर सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधापक महोपाध्याय श्री भानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदित पादशाह श्री अकब्बर जिहांगीर शाहि प्रदत्त 'पु(खु)स्फहम' 'नादिरज्जुमां' द्वितीयाभिधान महोपाध्याय श्री सिद्धिचन्द्रगणिविरचितं वासवदत्ताचंपूविवरणं समाप्तमिति । इति श्री वासवदत्ताख्यानरूपं चंपू तट्टीका समाप्तेति ॥ संवत् १७२२ वर्षे लेखिता श्रीरस्तु । श्री ग्रंथाग्रं ३१५० श्लोकसंख्ययाक्षरगणनया. [Folios 64 correct good copy in the box no. 1, in Vimala Gaccha's Bhandāra, Dośivādā, Vijāpur in Gujarāt. (२) श्रीरस्तु शुभं भूयात् लेखकपाठकयोश्च सूत्रवृत्तिमिलने ग्रंथसंख्या ३०१५ Folios 46 no. 781 of 1886-92 Government Collection with Bhandārkar Oriental Research Institute, Poona.]

## १० काव्यप्रकाशखण्डन ।

आदौ — महोपाध्यायश्रीभानुचन्द्रगणिगुरुभ्यो नमः ।

श्रेयःश्रियं तनुमतां तनुतां स शंभुः, श्रीअश्वसेनधरणीरमणाङ्गजन्मा ।
उत्कण्ठिता त्रिपथगा विततत्रिमूर्त्तिर्व्यालोकते त्रिजगतीमिव यस्य कीर्त्तिः ॥ १ ॥

जीयात् श्रीमदुदारवाचकसभालंकारहारोपमो, लोके संप्रति हेमसूरिसदृशः श्री भानुचन्द्रश्चिरम् ।
श्री शत्रुंजयतीर्थशुल्कनिवहप्रत्याजनोद्यद्यशाः, शाहिश्रीमदकब्बरार्पित 'महोपाध्याय' इत्यत्पदः ॥ २ ॥
शाहेरकब्बरधराधिपमौलिमौलेश्चेतःसरोरुहविलासषडंह्रितुल्यः ।
विद्वच्चमत्कृतकृते बुधसिद्धिचन्द्रः काव्यप्रकाशविवृतिं कुरुतेऽस्य शिष्यः ॥ ३ ॥
ग्राह्याः क्वापि गिरो गुरोरिह परं दूष्यं परेषां वचो, वृन्दं मन्दधियां वृथा विलपितं नास्माभिरुट्टंकितम् ।
अत्र स्वीयविभावनैकविदितं यत्कल्पितं कौतुकाद्, वादिव्यूहविमोहनं कृतधियां तत्प्रीतये कल्पताम् ॥ ४ ॥
परराचितकाव्यकण्टकशतखण्डनताण्डवं कुर्म्मः ।
कवयो यदुर्दुरूढाः (?) स्वैरं खेलन्तु काव्यगहनेषु ॥ ५ ॥

तत्रादावनुवादपूर्वकं काव्यप्रकाशखण्डनमाख्यातनियतिकृतनियमरहितामाल्हादैकमयीमनन्यपरतन्त्रां............।

... ... ...

अन्ते — कवेर्गिरां यद् यदवादि दूषणं पुरातनैर्गड्डरिकाप्रवाहतः ।
इदं सुवर्णं कृतमस्य खण्डनं मया बुधानां हृदयस्य भूषणम् ॥ १ ॥
प्रतापकृद् भानुरिवाहितानामानन्दकृच्चन्द्र इवेतरेषाम् ।
युक्तं तवैतत् किल वाचकेन्द्रश्रीभानुचन्द्रान्वयसंभवस्य ॥ २ ॥
भानुः प्रतापं न च दृक्प्रमोदं दृग्मोदमिन्दुर्न पुनः प्रतापम् ।
तनोषि चैतद् द्वयमप्यधीश तस्मादमूभ्यामधिकोऽसि नूनम् ॥ ३ ॥
कथं प्रभोऽपाकुरुषे प्रतापयशःप्रभाभिर्वत भानुचन्द्रौ ।
त्वं भानुचन्द्रानुचरोत्तमोऽपि यद् वा चरित्रं महतामचर्य्यम् ॥ ४ ॥
स्वस्यापरेषामपि कार्यसिद्धिं विधानतः सिद्धपदप्रतिष्ठा ।
जगज्जनानन्दविधायकत्वाद् यदाह्वये चन्द्रपदव्यवस्था ॥ ५ ॥

......प्रस्थापितः स्वविषयात् पादशाह श्री अकब्बर सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचनाद्यनेकसुकृत-विधापक महोपाध्याय श्री भानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादशाह श्री अकब्बर प्रदत्त पु(खु)स्फुहमा-पराभिधान महोपाध्याय श्री सिद्धचन्द्रगणिविरचिते काव्यप्रकाशखण्डने दशम उल्लासः समाप्तः । श्रीरस्तु शुभमस्तु संवत् १७२२ वर्षे पोसवदि १० गुरौ लिखितं श्री पार्श्वनाथप्रसादात्. [Folios 62, in the box no. 3, Vimala Gaccha's Bhandāra, Dośivādā, Vijāpur in Gujarāt.]

## ११ अनेकार्थोपसर्गवृत्ति ।

आदौ — ऐं नमः । महोपाध्याय श्री ५ भानुचन्द्रगणिगुरुभ्यो नमः ।
मूलम्—प्रणम्य श्रीमदर्हन्तं सिद्धिचन्द्रेण धीमता । अमरप्रोक्तनानार्थः पृथक्कृत्य विलिख्यते ॥ १ ॥
टीका—महोपाध्याय श्री ५ भानुचन्द्रगणिगुरुभ्यो नमः ।

श्रेयःश्रीर्भ्रमरीव पङ्कजवनं सौदामिनीवाम्बुदं गङ्गेवाम्बुनिधिं सुधेव शशिनं गौरीव गौरीश्वरम् ।
छायेवाम्बुजमित्रमाश्रितवती यत्पादपाथोरुहं स श्रीमान् प्रथमप्रभुः प्रतिदिनं पुष्णातु पुण्यश्रियम् ॥ १ ॥
अस्ति श्रीमदखण्डपाठकगणप्राप्तप्रतिष्ठोन्नतिर्भूपालावलिवन्द्यमानचरणः श्री भानुचन्द्रो गुरुः ।
यत्कीर्त्तिर्भुवनाङ्गणे गुणगणच्छन्ने न मान्ती पुनर्द्धातुः कर्णगताऽकरोदभिनवब्रह्माण्डयाच्ञामिव ॥ २ ॥
अकबरनृपतेः करस्थमुद्राङ्कितबहुशासनपत्रपत्रिणा यः ।
करमखिलमनाशयत् प्रजानां करनिकरैरिव भानुरन्धकारम् ॥ ३ ॥
तस्यास्ते सविधे विधेयजगतीलोकसरो मूर्त्तिमान्, विद्वद्वृन्दगजेन्द्रतर्जनहरिः श्रीसिद्धिचन्द्राभिधः ।
यत्कीर्त्तिभुजगाङ्गनावलिभिरुद्गीतां समाकर्णयन्, आनन्दामृतपूर्णकर्णकुहरः शेषः सुखं खेलति ॥ ४ ॥
परेषां यद् दूरे हृदयसरणेरस्ति तदिदं, विधानानामष्टोत्तरशतकमालोक्य मुदितः ।
महाराजश्रीमानकबरनृपो यस्य सहसा, भुवि ख्यातामाख्यां सपदि खुष्फहमेति विदधे ॥ ५ ॥

नानार्थस्यामरकृतेर्वीक्ष्य कोपाननेकशः। तेन स्वशेमुषीवृद्ध्यै व्याख्या काचिद् विधीयते ॥ ६ ॥

... ... ...

अन्ते — श्री भानुचन्द्रशिष्येण सिद्धिचन्द्रेण धीमता। अनेकार्थोपसर्गाणां वृत्तिरेषा विनिर्मिता ॥ १ ॥

इति पातिशाह श्री अकब्बर जल्लालदीन सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधापक महोपाध्याय श्री भानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपातिसाह श्री अकबर जल्लालदीन नूरदीन जिहांगीर प्रदत्त 'पु(खु)प्पहम' 'नादिरजुमां' द्वितीयाभिधान महोपाध्याय श्री सिद्धिचन्द्रगणि-रचिता अनेकार्थोपसर्ग-वृत्तिः समाप्ता ॥ [55 folios in the box no. 2, in Vimala Gaccha's Bhandāra, Dośivādā, Vijāpur in Gujarāt.]

## १२ धातुमंजरी। १३ आख्यातवाद टीका।

## १४ प्राकृतसुभाषितसङ्ग्रह।

आदौ – महोपाध्याय श्री भानुचन्द्रगणिगुरुभ्यो नमः।

पढमं चिर पढमजिणस्स नमह नहमणिमऊह रमणिज्जं।

... ... ...

अन्ते — इति पादशाह श्री अकब्बर सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधापक महोपाध्याय श्री ५ भानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादशाह श्री अकब्बर जल्लालदीन प्रदत्त पु(खु)सफहमापराभिधान महोपाध्याय श्री सिद्धिचन्द्रगणिविरचितः प्राकृतसुभाषितसंग्रहः समाप्तः ॥ [Folios 25 in the box no. 3, in Vimala Gaccha's Bhandāra, Dośivādā, Vijāpur in Gujarāt.]

## १५ सूक्तिरत्नाकर।

[The first 5 folios of the only MS. of this work containing verses relating to वसन्त season are wanting. Different poets including the author and different works of which verses are culled herein are mentioned here with their numbers from its 6th folio :—]

ग्रीष्मवर्णनम्—१५४ सूक्तिकल्पलतातः, १५५ श्रीपालकवेः, १५६ भोजदेवस्य, १५७ भीमस्य, १५८ कस्यापि, १५९ श्रीपालकवेः, १६० श्री भोजदेवस्य, १६१ क्षेमेन्द्रस्य, १६२ कस्यापि, १६३ राजशेखरस्य, १६४-५-६ एते सूक्तिकल्पलतातः, १६७-८ शर्वदा[स]सेतौ, १६९ सूक्तिकल्पलतातः, १७० कस्यापि, १७१ भर्तृहरेः, १७२-३-४ एते अमरचन्द्रकवेः, १७५-१८२ एते सूक्तिसुधातः, १८३ कस्यापि ॥ अथ ग्रीष्मवायवः—१८४ भट्ट बाणस्य, १८५ कस्यापि, १८६ सूक्तिसुधातः, १८७ सूक्तिसुधातः, १८८-१९१ भट्ट बाणस्यैते ॥ [Further two verses numbered again 187 and 188 are further written in the margin] अथ प्रपापालिकाः—१९२-४ केषामप्येते, १९५ सिद्धिचन्द्रस्य १९६ सूक्तिसुधातः। अथ जलकेलिः—१९७ अमरुकस्य, १९८ कलशस्य, १९९ गोइ धोइ कविराजयोः, २०० कुलपतेः, २०१-४ एते सूक्तिकल्पलतातः, २०५ भारवेः, २०६-२१२ एते अमरचन्द्र कवेः, २१३-२१७ सिद्धिचन्द्रस्य, २१८-२२० सूक्तिसुधातः।

अथ प्रावृड्वर्णनम्—२०१-२ एतौ सूक्तिकल्पलतातः, २०३ अमरचन्द्रकवेः, २०४ कस्यापि, २०५ कस्यापि, २०६ कस्यापि, २०७ कस्यापि, २०८ त्रिविक्रमस्य, २०९ विज्जिकायाः, २१० सूक्तिमहस्रात्, २११ पाणिनेः, २१२ कस्यापि, २१३-१६ केषामप्येते, २१७-२२० केषामप्येते, २२१ कस्यापि, २२२ कस्यापि, २२३-४ सिद्धिचन्द्रस्य, २२५ गांधिक भल्लकस्य, २२६ कस्यापि, २२७ सूक्तिकल्पलतातः, २२८ रघुपतेः, २२९ भोजदेवस्य, २३० कस्यापि, २३१ कस्यापि(=शर्वदासस्य) २३२ कस्यापि, २३३ कस्यापि, २३४ भानुकरस्य, २३५-६ एतौ सूक्तिकल्पलतातः, २३७-२४४ केषामप्येते, २४५ भानुकरस्य [in the margin one verse is added], २४६ छोलिम्बकवेः, २४७ हरिहरकोकाङ्गजपण्ड्यारामजिष्णोः, २४८-९ भर्तृहरेरेतौ, २५०-१ भर्तृहरेरेतौ, २५२-५ रुद्रस्य] while in the margin no. 255 is repeated stating छोलिम्बकवेरेतौ] ॥ अथ विद्युत्—२५६-९ सिद्धिचन्द्रस्य, २६० कुमारदासस्य, २६१ कस्यापि, २६२-९ सूक्तिसुधातः।

अथ प्रावृट्पथिकः—२७०–१ सिद्धिचन्द्रस्येतौ, २७२ काव्यप्रकाशात्, २७३ कस्यापि, २७४ कस्यापि, २७५ कस्यापि, २७६ भट्टबाणस्य, २७७ कस्यापि, २७८ भर्तृहरेः, २७९ रुद्रस्य, २८० लोलिम्बराजस्य, २८१ भर्तृहरेः, २८२ कस्यापि, २८३–४ कयोरप्येतौ, २८५ सूक्तिकल्पलतातः, २८६–७ मेघाभ्युदयात्, २८८ भर्तृहरेः, २८९ कालिदासस्य, २९० सिद्धिचन्द्रस्य, २९१ सूक्तिकल्पलतातः, २९२ कस्यापि, २९३ लोलिम्बकवेः, २९४ भर्तृहरेः, २९५ कस्यापि, २९६ कस्यापि, २९७ भर्तृहरेः, २९८–९ (in the margin विज्जाकायाः) ३०० केषामप्येते ३०१–२ कयोरप्येतौ, ३०३ सिद्धिचन्द्रस्य, ३०४ कस्यापि, ३०५ कस्यापि, ३०६–७ रुद्रस्येतौ, ३०८ सिद्धिचन्द्रस्य, ३०९ कस्यापि, ३१० कस्यापि, ३११ (in the margin इत्युक्तं ३०१–६ सिद्धिचन्द्रस्य, ३०७–८ सूक्तिकल्पलतातः), ३१२–३ सूक्तिसुधातः ॥ अथ दोलाकेलिः—३१४–५ सूक्तिसुधातः, ३१६–९ एते अमरचन्द्रकवेः, ३२०–१ नाथकुमारस्य, ३२२ बिल्हणस्य, ३२३ कस्यापि, ३२४ कस्यापि, ३२५ सूक्तिकल्पलतातः ॥ अथ वर्षावायवः—३२५ (doubled)—३२९ कृष्णक्रीडितकाव्यादेते (in the margin ३२४ सूक्तिकल्पलतातः), ३३० सूक्तिकल्पलतातः, ३३१ वैद्यभानुपण्डितस्य (in the margin one verse is quoted and numbered ३३१ अमरचन्द्रकवेः), ३३२ कस्यापि, ३३३ योगेश्वरस्य, ३३४ कस्यापि, ३३५–६ एतौ सूक्तिकल्पलतातः, ३३७ सूक्तिसुधातः, ३३८ (in the margin it is stated पुंढला पानानी षोटी छे), ३३९ रुद्रटस्य, ३३९ (doubled) ३४० लोलिम्बकवेरेतौ, ३४१–३ केषामप्येते, ३४४ भर्तृहरेः, ३४५–६ श्रीहर्षस्येतौ, ३४७ कस्यापि, ३४८ सूक्तिसहस्रात्, ३४९ व्यासस्य, ३५० भट्टिस्वामिनः, ३५१ कस्यापि, ३५२ सिद्धिचन्द्रस्य (in the margin ३५२ सोमेश्वरस्येतौ), ३५३ कस्यापि, ३५४–९ श्रुतिधररामस्य, ३६० मदनस्य, ३६१ बिल्हणस्य, ३६२ सूक्तिकल्पलतातः, ३६३–८ एते सूक्तिसुधातः, ३६९ कस्यापि ॥

अथ शरच्चन्द्रं प्रति विरहिण्युपालम्भाः—३७०–१ कयोरप्येतौ, ३७२ काव्यप्रकाशात्, (4 verses given in the margin ३७३–४ भर्तृहरेः)। अथ भ्रमरीक्रीडा—३७३ सूक्तिसुधातः, ३७४ कस्यापि। अथ शरद्वायवः—३७५ वैद्य भानुपण्डितस्य, ३७६ सूक्तिकल्पलतातः, ३७७ कस्यापि, ३७८ मदनस्य, ३७९ राजशेखरस्य। अथ शरत्पथिकः—३८० कस्यापि, ३८१ विज्जाकायाः, ३८२–३ मधुसूदनसरस्वत्याः ॥

अथ हेमन्तः—३८४–५ शर्वदासस्य, ३८६ शर्वदासस्य, ३८७ कालिदासस्य, ३८८–३९० बिल्हणस्येतौ, ३९१–३९१ (doubled)—३९६ एते सूक्तिकल्पलतातः, ३९७ कस्यापि, ३९८–९ सिद्धिचन्द्रोपाध्यायस्य, ४०० रघुपतेः, ४०१ भगीरथस्य, ४०२ कस्यापि, ४०३–४ कस्यापि, ४०५ कस्यापि, ४०६ सूक्तिकल्पलतातः, ४०७ लक्ष्मीधरस्य, ४०८ कस्यापि (in the margin सूक्तिसुधातः), ४०९ सूक्तिसहस्रात्, ४१० बिल्हणस्य, ४११ अमरुकस्य, ४१२ कस्यापि, ४१३ अमरचन्द्रकवेः, ४१४ (blank), ४१५–६ भर्तृहरेरेतौ, ४१७ लोलिम्बकवेः, ४१८ भर्तृहरेः, ४१९–२१ केषामप्येते, ३२२ कस्यापि, ३२३–२६ एते सूक्तिसुधातः (in the margin ४२३ भानुभट्टस्य, ४२४–५ एतौ अमरचन्द्रकवेः), ४२७ कस्यापि। अथ हेमन्तपथिकः—४२८ कस्यापि, ४२९ श्रीभोजस्य, ४३० बाणभट्टस्य, ४३१ कस्यापि, ४३२–३ एतौ सूक्तिसुधातः। अथ कन्दुकलीला—४३४–६ एते सूक्तिसुधातः, ४३७ राजशेखरस्य, ४३८–९ कयोरप्येतौ, ४४० सूक्तिसहस्रात्, ४४१ दण्डिनः, ४४२ भारवेः, ४४३ कालिदासस्य, ४४४ सूक्तिकल्पलतातः ॥

अथ शिशिरः — ४४५–९ एते सूक्तिसुधातः, ४५० अमृतवर्धनस्य, ४५१ कस्यापि, ४५२ कस्यापि, (in the margin राजशेखरस्य), ४५३ बिल्हणस्य, ४५४ महामनुष्यस्य, ४५५–६ बालभारतकर्तुरमरचन्द्रकवेरेतौ, ४५७ कस्यापि, ४५८ कस्यापि, ४५९ सूक्तिसहस्रात्, ४६० कस्यापि, ४६१ सूक्तिकल्पलतातः, ४६२–५ केषामप्येते। अथ दृग्मिलनक्रिया—४६६ सूक्तिसुधातः, ४६७ कयोरप्येतौ। अथ शिशिरवायवः—४६९-७० वंकलावर्त्तस्येतौ, ४७१ (in the margin बिल्हणस्य)। अथ शिशिरपथकः—४७२ सूक्तिसुधातः, ४७३ कस्यापि, ४७४ बाणस्य, ४७५ मयूरस्य। अथ ऋतुसन्धिः—४७६–७ भानुकरस्य ॥

इति पादशाह श्री अकबर जल्लालदीन सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधापक महोपाध्याय श्री भानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपातिशाह श्री अकबर जल्लालदीन पातशाह श्री नूरदीन जिहांगीर प्रदत्त 'खुस्फहम' 'जिहांगीर पसंद' द्वितीयाभिधान महोपाध्याय श्री सिद्धिचन्द्रगणिविरचिते सूक्तिरत्नाकरे षड्ऋतुवर्णनं समाप्तं ॥ [16 folios whereof the first five are wanting, each having 22 lines on its each side. No. 1613 in Pravartaka Kāntivijaya's Bhandāra at Baroda.]

## १६ मङ्गलवाद।

आदौ—ॐ ऐं नमः। शंखेश्वरपुराधीशं श्रेयोवल्लीवनाम्बुदम्। विघ्नौघमत्तमातङ्गपञ्चास्यं श्रीजिनं भजे ॥
अथ मंगलवादः प्रारभ्यते........।

अन्ते—इति महोपाध्यायश्रीभानुचन्द्रगणिशिष्यमहोपाध्यायश्रीसिद्धिचन्द्रगणिविरचितो मंगलवादः समाप्तः ॥

[A note is added by a later scribe—संवत् १९६७ वर्षे कार्तिक शुक्लपक्षे तिथौ पूर्णिमायां लीः० बारोट नारायण नथुजी। श्री वल्लभि नगरे। 5 folios no. 2089 Pravartaka Kāntivijaya's Bhandāra at Baroda.]

## १७ सप्तस्मरणवृत्ति।

आदौ—श्रीनाभेयः श्रियं दद्यात् सुरासुरनमस्कृतः। विघ्नानेकपपञ्चास्यो दधत् विश्वजनीनताम् ॥ १ ॥
अकबर सुरत्राणहृदयाम्बुजषट्पदः। भानुचन्द्रश्चिरं जीयाद् गुरुर्मे वाचकाग्रणीः ॥ २ ॥
अष्टोत्तरशतानां योऽवधानानां विधायकः। दधानः '(खु)स्फहमे'ति विरुदं शाहिनार्पितम् ॥ ३ ॥
तेन वाचकचन्द्रेण सिद्धिचन्द्रेण सर्वदा। बुद्धिवृद्ध्यै वितन्द्रेण बालानामल्पमेधसाम् ॥ ४ ॥
(त्रिभिर्विशेषकम्)
शश्वत् सप्तस्मरणानां वृत्तिरेषा विधीयते। तत्र तावन्नमस्कार एव व्याख्यायते मया ॥ ५ ॥

(१)......नमस्कारार्थः ॥ अथ पंचाशीत्यधिकशताक्षरमानस्य उपसर्गहरस्तोत्रस्येयमाद्यां गाथामाह–।

(२)......इति पातशाह श्री अकब्बर जल्लालदीन श्री सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरमोचनसर्वत्र-गोवधनिवर्तनाद्यनेकसुकृतनिर्मापकमहोपाध्याय श्री भानुचन्द्रगणिशिष्ययुगपदष्टोत्तरशतावधानचमत्कृतपादशाह श्री अकब्बर जल्लालदीन पादशाह श्री नूरदीन जिहांगीरप्रदत्त 'पु(खु)स्फहम' 'नादिरजमां' द्वितीयाभिधान–महोपाध्यायश्रीसिद्धिचन्द्र-गणिविरचितायां सप्तस्मरणटीकायां उपसर्गहरस्तोत्रटीका समाप्ता ॥

(३)......सप्तत्यधिकशतजिनस्तोत्र (तिजयपहुत्त) वृत्तिः संपूर्णा समजनि ॥

(४)......भयहरस्तोत्र (नमिऊण) वृत्तिः संपूर्णा समजनि॥ संवत् १७९२ आषाढादि एवं असाढ शुदि ११ शनौ श्री पत्तन नगरे लिखिता ॥ छ ॥ [13 folios No. 885 of 1892-95 A. D. Government Collection with Bhandārkar O. R. Institute, Poona.]

(५) अजितशान्तिस्तोत्रवृत्तिः–
विश्वभृद् वृषभस्वामी कामितार्थप्रदोऽस्तु नः। नाभिजातोऽपि यश्चित्रमभिजातशिरोमणिः ॥ १ ॥
वाचकश्रेणिमुख्येन सिद्धिचन्द्रेण तन्यते। अजितशान्तिस्तोत्रस्य वृत्तिर्बालावबोधिका ॥ २ ॥

[Gloss upto 2 *gāthās* of this *stotra* over and above that on the above four hymns. 17 folios bundle no. 40 MS. no. 141, Dehlā Upāśraya's Bhandāra, Ahmedābād.]

(६) लघुशान्तिस्तोत्रवृत्तिः–
प्रणम्य श्रीमदर्हन्तं लघुशिष्यहिते मया। लघुशान्तिस्तोत्रस्यैषा लघुवृत्तिर्विधीयते ॥ १ ॥
अन्ते — लघुशान्तिस्तववृत्तिर्विहिता श्रीसिद्धिचन्द्रमुनिराजैः।
पठनाय चारुबुद्धेः कपूरचन्द्राभिधानशिष्यस्य (?) ॥

इति पातशाह [as above] विनिर्मापक पादशाह प्रदापित इष्यद् 'उपाध्याय' पद्धारक महोपाध्याय श्री भानुचन्द्र [as above] शतावधानसाधनप्रमुदितपादशाह श्री अकब्बर जल्लालदीन प्रदत्त पु(खु)स्फहमिति द्वितीयाभिधानेन महोपाध्याय श्री सिद्धिचन्द्रगणिविरचिता लघुशान्तिस्तवटीका संपूर्णा समजनि ॥

(७) बृहत् शान्तिस्तोत्रवृत्तिः–
श्रीशान्तिस्वामिनं नत्वा शिवतातिं जिनेश्वरम्। वृत्तिरेषा बृहच्छान्तेः सिद्धिचन्द्रेण लिख्यते ॥ १ ॥

[The last page wanting; folios from 17 to 30 also numbered 1 to 14 containing gloss of the above 6th and 7th hymns in full. Bundle 41 MS. no. 140, in Dehlā Upāśraya's Bhandāra, Ahmedābād.]

## १८ लेखलिखनपद्धति ।

अन्ते — इति महाराजाधिराज पादशाह श्री अकब्बर जल्लालदीन सूर्यसहस्रनामाध्यापक श्री शत्रुंजयतीर्थकरविमोचन-गोवधनिवर्त्तनाद्यनेकसुकृतविनिर्मापक महोपाध्याय श्री भानुचन्द्रगणिशिष्य युगपदष्टोत्तरशतावधानसाधनप्रमुदितपादशाह श्री अकब्बर जल्लालदीन पादशाह श्री जिहांगीर नूरदीन प्रदत्त 'पु(खु)श्फहम' 'नादिरजमां' द्वितीयाभिधान महोपाध्याय श्री सिद्धिचन्द्रगणिविरचिता लेखलिखनपद्धतिः समाप्ता। लिखितेयं विद्यापुरे सं० १७११ वर्षे । [The MS refered to in Ātmānanda IV, no. 8, p. 22; as in the collection of the late Muni Vicakṣaṇavijaya.]

## १९ संक्षिप्त कादंबरी कथानक [गूजराती गद्यमय] ।

ॐ ॥ महोपाध्याय श्री ५ भानुचन्द्रगणिगुरुभ्यो नमः ॥

श्री सर्वज्ञं नत्वा भक्त्या स्वीयं च सद्गुरुं स्मृत्वा । कादंबर्युद्धारो विधीयते सिद्धिचन्द्रेण ॥

विदशा नगरी वेत्रवती नदीनिं तहिं । त्यहां राजा शौद्रक राज्य करिं । एक सामिं दक्षिणदेशथी एक चांडाली परमसुंदरी, शुक एक लेई राजद्वारि आवी ।

... ... ...

अन्ते—पूर्विं वृद्धभोजइं वाणपंडितपासिं कादंबरीनी कथा नवनवरससंयुक्त करावी । ते कथा घणुं कठिन छइ । ते माटइ मंदबुद्धिनई श्रीच्छवानइ अर्थिं संक्षेपइं लोकभाषाइं ये प्रबंध कीधो छि ।

पातशाह श्री अकब्बर जल्लालदीन श्री सूर्यसहस्रनामाध्यापक, श्री शत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधापक महोपाध्याय श्री ५ भानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपातशाह श्री अकब्बर जल्लालदीन प्रदत्त खुष्फहमापराभिधान महोपाध्याय श्री सिद्धिचन्द्रगणिविनिर्मितं संक्षिप्त कादंबरीकथानकं समाप्तं ॥ छ ॥ संवत १७४७ वर्षे पौष वदि १३ शनौ दिने लखितं पत्तन नगरे ॥ [8 folios in Dāyara Upāśraya Bhandāra at Pālanpur, published by Jinavijaya Muni in Purātatva vol. V, no. 4, pp. 244 to 256.]

*

कामंदकीयो नीतिसारः—प्रौढप्रत्यर्थिमत्तमातंगकंठकंठीरवायमान-सकलजगज्जीवजीवनौपधायमान-पातिशाह श्री अकब्बर प्रदापितोपाध्यायपदधारक-श्रीशत्रुंजयकरमोचनाद्यनेकसुकृतकारक-महोपाध्याय श्री भानुचन्द्रगणीनां शिष्येण अष्टोत्तरशतावधानसाधनप्रमुदितपातिशाह श्री अकब्बर प्रदत्त 'पुसफहमा'पराभिधानेन महोपाध्याय श्री सिद्धिचन्द्रगणिना लिखापिता प्रतिरियं. [39 folios in bundle no. 2 Vimala Gaccha's Bhandāra, Vijāpur.]

---

# मूलग्रन्थ तथा परिशिष्टान्तर्गत विशेषनामानुक्रमणिका